श्रीरामानन्ददर्शनशोधसंस्थानग्रन्थमाला का ९२वाँ पुष्प

卐 सर्वेश्वरश्रीसीतारामाभ्यां नमः 卐

श्रीहनुमते नमः

卐 प्रस्थानत्रयानन्दभाष्यकाराय नमोनमः 卐





卐 विभा-रत्नप्रकाशिकायुता 卐

# प्रबोधरत्नमाला

### संशोधक / सम्पादक

आनन्दभाष्यसिंहासनासीनजी

जगद्गुरुश्रीरामानन्दाचार्यपीठ-अहमदाबाद-७

# तिथि जन्माष्टमी

श्रीरामानन्दाब्द ७०६-२०६३ विक्रमाब्द

卐 प्रकाशक 卐

श्रीरामानन्ददर्शनशोधसंस्थान

जगद्गुरुश्रीरामानन्दाचार्यपीठ-श्रीकोसलेन्द्रमठ

अहमदाबाद-३८०००७

卐 मुद्रक 卐

श्रीआनन्दभाष्यमुद्रणालय

जगद्गुरुश्रीरामानन्दाचार्यपीठचौक

श्रीकोसलेन्द्रमठ

अहमदाबाद-७ फोन-२६६०१००१



जय श्री राम

## 卐 निर्दशिका 卐



## ३१-जगद्गुरुश्रीवैदेहीवल्लभाचार्याः

**आविर्भाव**-जन्माष्टमी वि.सं. १८११ श्रीरामानन्दाब्द ४५५। **स्थान**-कुंडहर पोखरा नेपाल । **पिता**-श्रीगजेन्द्रशर्मा जी। **माता**-श्रीसरस्वतीदेवीजी । **गुरु**-जगद्गुरु श्रीराघवेन्द्राचार्यजी । **गोत्र**-वशिष्ठ । **प्रवर**-वशिष्ठ शक्ति पराशर । **वेद**-शुक्लयजुर्वेद । **शाखा**-माध्यन्दिनीय वाजसनेय । **श्रौतसूत्र**-कात्यायनीय । **धर्मसूत्र**-बोधायनीय । पाद-दक्षिण । **शिखा**-दक्षिण । **देवता**-शिवजी । **इष्ट**-श्रीसीतारामजी । **ब्राह्मण**-कान्यकुब्ज । **तिरोभाव**-मौनी अमावास्या वि.सं. १८७१ श्रीरामानन्दाब्द ५१५-६० वर्ष उम्र ।

**कृति**-१-श्रीसूक्तप्रकाशः २-रत्नप्रकाशिका-प्रबोधरत्नमाला टीका ३-रमास्तुतिः ४-सत्ख्यातिविजयवाद आदि ।

**राघवेन्द्रार्यशिष्याय गजेन्द्रशर्मसूनवे ।**
**वैदेहीवल्लभार्याय भूयात्सर्वत्र मङ्गलम् ॥१॥**
**नेपाले जन्मभूर्यस्य कुण्डहरसरोवरम् ।**
**सरस्वतीतनूजाय सदास्तु मङ्गलं भुवि ॥२॥**
**इन्द्रियवसुब्रह्मा( १८११ )ब्दे जन्माष्टमीतिथौशुभे ।**
**विक्रमे समभूदार्यस्तस्यास्तु मङ्गलं भुवि ॥३॥**
**ब्रह्मर्षिवसुचन्द्रा( १८७१ )ब्दे मौन्यमायांशुभेदिने ।**
**विक्रमेसमगाल्लोकं भूयात्सर्वत्र मङ्गलम् ॥४॥**
**ब्राह्मणकान्यकुब्जोयो वशिष्ठगोत्रसम्भवः ।**
**शुक्लयजुर्वेदीयश्च तस्यास्तु मङ्गलं सदा ॥५॥**
**माध्यन्दिनीयशाखायाश्चिन्तनेऽध्यापनेरतः ।**
**यजुःकर्मविदे तस्य संभूयान्मङ्गलं भुवि ॥६॥**
**बोधायनीयधर्मस्य सूत्रतत्त्वविदे सदा ।**
**श्रौतकात्यायनीयस्य भूयात्सर्वत्र मङ्गलम् ॥७॥**
**वशिष्ठशक्तिपराशरेति त्रिप्रवरान्विते ।**
**शिखादक्षिणपादाय संभूयान्मङ्गलं भुवि ॥८॥**
**शिवदैवकोयोहि सीतारामेष्टकश्च यः ।**



**वेदतत्त्वविदे भूयाद्भुवि सर्वत्र मङ्गलम् ॥९॥**
**गुरोः श्रीराघवेन्द्रार्यात्तुरीयाश्रमवासिनाम् ।**
**धारणीयतयादिष्टं वेदस्मृत्यादिमोदितम् ॥१०॥**
**संलब्ध्वा वस्त्रकाषायमाचार्यकृपया गुरुः ।**
**एकत्रिंशत्तमाचार्यवैष्णवानामभून् मुनिः ॥११॥**
**रत्नप्रकाशिका यस्य सर्वरत्नप्रकाशिका ।**
**रमास्तुतिरितिख्याता सत्ख्यातिविजयस्तथा ॥१२॥**
**श्रीसूक्तस्यप्रकाशेन सर्वतत्त्वप्रकाशकः ।**
**तस्याचार्यसुरेन्द्रस्य भूयात्सर्वत्र मङ्गलम् ॥१३॥**
**श्रीसीतारामयोर्ध्याने चिन्तने पूजनेरतः ।**
**रामतत्त्वविदे भूयान्मङ्गलं सर्वदा भुवि ॥१४॥**
**रामषडक्षरोमन्त्रो यस्य प्राणतयामतः ।**
**रामाष्टाक्षरमन्त्रश्च तस्य भवतु मङ्गलम् ॥१५॥**
**राममन्त्रजपेलीनो रामतत्त्वप्रचारकः ।**
**कोशलेन्द्राय दाता यस्तस्य भूयात्सुमङ्गलम् ॥१६॥**



## १९-जगद्गुरुश्रीकेवलरामाचार्यः ( कूवाचार्यः )

**आविर्भाव**-वैशाख शुक्ल एकादशी विक्रमाब्द १५४५ श्रीरामानन्दाब्द १८९। **स्थान**-बोरनी-ब्रज । **पिता**-श्रीराममिश्र जी। **माता**-श्रीसुखदेवीजी । **गुरु**-श्रीनरसिंहदासजी । **गोत्र**-धनञ्जय । **प्रवर**-धनञ्जय विश्वामित्र मधुछन्द । **वेद**-साम । **शाखा**-कौथुमी । **श्रौतसूत्र**-गोभिल । **धर्मसूत्र**-बोधायनीय । **शिखा**-**पाद**-वाम । **देवता**-विष्णु । **इष्ट**-श्रीसीतारामजी । **ब्राह्मण**-सरयूपारीण । **द्वारपीठ**-झीथडा-राजस्थान। **तिरोभाव**-भाद्र शुक्ल एकादशी । विक्रमाब्द १७२५ श्रीरामानन्दाब्द ३६९-१८० वर्ष उम्र ।

**कृति**-१-प्रबोधरत्नमाला २-प्रबोधरत्नमञ्जूषा ३-श्रीरामाष्टकम् आदि ।

**परम्परा**-१-श्रीआनन्दभाष्यकारजी २-श्रीसुरसुरानन्दाचार्यजी ३-श्रीमाधवानन्दाचार्यजी ४-श्रीगरीबदासाचार्यजी ५-श्रीलक्ष्मीदासजी ६-श्रीगोपालदासजी ७-श्रीनरसिंहदासजी ८-श्रीकेवलरामाचार्यजी ।

श्रीराममिश्रपुत्राय सुखदेवी सुताय च ।
नरसिंहदासशिष्याय भूयाद्भुवि सुमङ्गलम् ॥१॥
व्रजस्य बोरनीस्थाने कृष्णेन पावनीकृते ।
जातस्य सर्वदा भूयात् कूवाचार्याय मङ्गलम् ॥२॥
बाणाब्धिशरचन्द्राब्दे शुक्लस्यैकादशीतिथौ ।
वैशाखमासे जातस्य भूयात् सर्वत्र मङ्गलम् ॥३॥
धनञ्जयविश्वामित्रमधुच्छन्द इतिश्रुतः ।
त्रिप्रवरान्वितोधनञ्जयगोत्रेऽतिविश्रुतः ॥४॥
कौथुमीशाखया युक्तोवेदः सामः सुभाषितः ।
गोभिलः श्रौतसूत्रश्च धर्मो बोधायनीयकः ॥५॥
देवता विष्णुर्विख्यातः सीतारामेष्टकश्च यः ।
सरयूपारिविप्राय भूयाद्भुवि सुमङ्गलम् ॥६॥
जानरायाख्य श्रीरामो यत्रास्ति संविराजितः ।
झीथडाद्वारपीठोऽस्य राजस्थानेऽतिनिर्मलः ॥७॥
बाणनेत्रर्षिचन्द्रेऽब्द एकादशीतिथौ शुभे ।
साकेतमगमदार्यो भाद्रशुक्लेऽतिनिर्मले ॥८॥
परम्परान्वितो वेषः काषायेण सुशोभितः ।
वेदादिशास्त्रविहितो यस्तस्यास्तु सुमङ्गलम् ॥९॥
भाष्यकारस्य शिष्यो यः श्रीसुरसुरानन्दकः ।
तस्याभून्माधवानन्दस्ततो गरीबदासकः ॥१०॥
तस्य श्रीलक्ष्मीदासोऽभूत्तस्य गोपालदासजिः ।
गोपालदाससच्छिष्यः श्रीनरसिंहदासजिः ॥११॥
तस्य सच्छिष्यतां यातः कूवाचार्य उदारधीः ।
प्रबोधरत्नमाला च प्रबोधरत्नमञ्जूषा ॥१२॥
रामाष्टकं प्रभृतिकाः प्रबन्धाः सन्ति निर्मलाः ।
जनप्रबोधकाः सर्वे स्वान्तोद्दीणनतत्पराः ॥१३॥
श्रौतविशिष्टाद्वैतस्य सारतत्त्वेन गर्भिता ।
वैष्णवाचारसंयुक्ताः यस्य तस्याऽस्तु मङ्गलम् ॥१४॥

पुष्कर्णा ब्राह्मण के आराध्य श्रीमाधवरायजी की दिव्य झाँकी अंजार-कच्छ

आचार्यपीठों के उपास्य देव सर्वेश्वर श्री सीतारामजी की दिव्य झाँकी विश्रामद्वारका

आनन्दभाष्य सिंहासनासीन जगद्गुरुश्री रामानन्दाचार्य श्री रामेश्वरानन्दाचार्यजी महाराज

प्रस्थानत्रयानन्द भाष्यकार जगद्गुरु श्रीरामानन्दाचार्यजी महाराज (१३५६-१५३२)

स्व. बीपीनचन्द्र कान्तिलाल हर्ष

स्व. कान्तिलाल रतनशी हर्ष

**की पुण्य स्मृति में श्रीलाभगौरी कान्तिलालहर्ष परिवार के सौजन्य से**

જય શ્રી રામ
જય માધવરાયજી
જય કુળદેવી માં



## 卐 કલ્પવૃક્ષ 卐



| | |
|---|---|
| પુત્ર વિશ્વનાથ કાન્તીલાલ હર્ષ<br>અ.સૌ. જ્યોતી વી. હર્ષ<br>પુત્ર હીરેન વી. હર્ષ<br>પુત્રવધુ અ.સૌ. ફાલ્ગુની એચ. હર્ષ<br>(૧) | પુત્રસ્વ. બીપીનચંદ્ર કાન્તીલાલ હર્ષ<br>(૨) |
| ગં.સ્વ. લાભગૌરી કાન્તીલાલ હર્ષ<br>પુત્રી સ્વ. અલ્કા કાન્તીલાલ હર્ષ<br>પુત્રી સ્વ. બેબી કાન્તીલાલ હર્ષ<br>પુત્ર અજય કાન્તીલાલ હર્ષ<br>અ.સૌ. બીના અજય હર્ષ<br>પુત્રી નેહલ અજય હર્ષ<br>પુત્ર જલદીપ અજય હર્ષ<br>પુત્ર જતીન અજય હર્ષ<br>પુત્રવધુ અ.સૌ. કાજલ જલદીપ હર્ષ<br>(૩) | પુત્ર અંબાલાલ કાન્તીલાલ હર્ષ<br>અ.સૌ. હર્ષિદા અંબાલાલ હર્ષ<br>પુત્ર સંદીપ અંબાલાલ હર્ષ<br>પુત્રી આરતી અંબાલાલ હર્ષ<br>(૪) |
| પુત્ર ભગીરથ કાન્તીલાલ હર્ષ<br>અ.સૌ. પ્રીતી ભગીરથ હર્ષ<br>પુત્ર શીવમ ભગીરથ હર્ષ<br>પુત્રી ટ્વીંકલ ભગીરથ હર્ષ<br>સ્વ.પુત્રી ગાયત્રી ભગીરથ હર્ષ<br>(૫) | પુત્ર દીપક કાન્તીલાલ હર્ષ<br>અ.સૌ. જીના દીપક હર્ષ<br>પુત્ર ઉત્સવ દીપક હર્ષ<br>પુત્રી અંજલી દીપક હર્ષ<br>પુત્રી કુંજલ દીપક હર્ષ<br>(૬) |
| પુત્રી દુર્ગા કાન્તીલાલ હર્ષ<br>જમાઈ જયંતભાઈ શંકરલાલ વાલાણી<br>દોહોત્રી આશા જયંતકુમાર વાલાણી | દોહોત્રી અમર જયંતકુમાર વાલાણી<br>દોહોત્રી આનંદ જયંતકુમાર વાલાણી |
| શ્રીલાભગૌરી કાન્તીલાલ હર્ષ<br>મકાન.નં. ૧૦૬ રોટરી નગર<br>રીલોકેશન સાઈડ, ભુજ-કચ્છ | સ્વ. કાન્તીલાલ રતનશી હર્ષ પરીવારનાં જય સીતારામ<br>આસ્યાબેનનાં જય સીતારામ<br>પુષ્કર્ણા બ્રાહ્મણ (માધવરાયજીનાં પુજારી (અંજાર-કચ્છ) |

સ્વ. કાન્તીલાલ રતનશી હર્ષ તથા સ્વ. વીપીનચન્દ્ર કાન્તીલાલ હર્ષ

**ની પુણ્ય સ્મૃતિમાં**

શ્રીલાભગૌરી કાન્તીલાલ હર્ષ પરીવારના સૌજન્યથી આ ગ્રન્થ છપાવવામાં આવેલ છે.

❁ सर्वेश्वर श्रीसीतारामाभ्यां नमः ❁

卐 जगद्गुरुश्रीकेवलरामाचार्यप्रणीता 卐

# प्रबोधरत्नमाला

रामं सुरेशार्चितपद्मपादं प्रफुल्लनीलाब्जसमानकान्तिम् ।
एकोबहुस्यामिति बुद्धिमन्तं नमामि नित्यं भवसिन्धुपोतम् ॥१॥

जगद्गुरुश्रीवैदेहीवल्लभाचार्यप्रणीता

## 卐 रत्नप्रकाशिका 卐

विश्वलीलस्य रामस्य कामयेऽहं कृपालवम् ।
यतः सफलतां यानि कार्येऽस्मिन् सुयशस्करीम् ॥
सीताकान्तसमारम्भां रामानन्दार्यमध्यमाम् ।
राघवेन्द्रार्यगुर्वन्तां वन्दे गुरुपरम्पराम् ॥

ग्रन्थकारः-जगद्गुरुश्रीकूबाचार्यमहाराजो ग्रन्थादौग्रन्थमध्ये ग्रन्थान्ते च मङ्गलमाचरणीयमिति शिष्टोक्तवचनानुसारतः 'मङ्गलादीनिमङ्गलमध्यानि-मङ्गलान्तानि च शास्त्राणि प्रथन्ते' इत्यादिमहाभाष्यकारभगवत् पतञ्जलिमतानुसारतश्च स्वेष्टदेवतानमस्कारात्मकं मङ्गलंग्रन्थादौनिवघ्नाति 'राम' मित्यादिना । ननु किमर्थं मङ्गलं क्रियते न हि मन्दोऽपिप्रयोजनमन्तरेणकस्मिंश्चिदपि कार्येप्रवर्तते । कथ्यते निर्विघ्नपूर्वकग्रन्थसमाप्तये एवञ्चेत्स्वस्मिन् मनस्येवतत् क्रियतां ग्रन्थे किमर्थन्तदुल्लेखोविधीयते ? मैवं शिष्यशिक्षाऽर्थं ग्रन्थघटकं तत् क्रियते यदस्माकं श्रीगुरुवरैर्मङ्गलं विहितमतोऽस्माभिरपिनिजनिर्मितग्रन्थे मङ्गलंविधातव्यं यतोनिर्विघ्नतास्वग्रन्थेस्यादिति । तदुक्तं शिष्टैः 'समाप्तिकामो मङ्गलमाचरेत्' 'दधिन्यायेनानुषङ्गतोमङ्गलस्यचेति । स्वनिष्ठापकर्षप्रकारकपरनिष्ठोत्कर्षविशेष्यबोधोहिनमस्कारपदार्थः।अतो न प्रयोजनमनुद्दिश्य न मन्दोऽपि कस्मिंश्चिदपिकार्येप्रवर्तते इतिन्यायावसरः । अनेनाद्वैतनिरसनपूर्वकं विशिष्टाद्वैत मतं स्थाप्यतेद्वैते हि मङ्गलसूचिकाश्रुतिसङ्गच्छते नाद्वैते । सुराणामीशः सुरेशः ।

पद्ममिव पादौपद्मंचरणौ सुरेशेनमघोना अर्चितौ पूजीतौ पद्मपादौ कमलसदृश चरणौ यस्य स तमित्युक्तं विशेषणेन। अनेन 'भीषाऽस्माद्वातः पवते। भीषोदेति सूर्यः। भीषाऽस्मादग्निश्चेन्द्रश्च। मृत्युं र्धावति पञ्चम' इतितैत्तिरीयोपनिषदुस्था श्रुतिर्बोध्यते। शासकादेवभयंभवति यतो हि तदर्चनं तदज्ञापालनञ्च क्रियते। 'विश्वं जातं यतोऽद्धायदवितमखिलं लीयते यत्रचान्ते सूर्योयत्तेजसेन्दुः सकल मविरतं भासयत्येतदेषः। 'यद्भीत्यावातिवातोऽवनिरपि सुतलं याति नैवेश्वरोज्ञः साक्षीकूटस्थ एकोबहुशुभगुणवानव्ययोविश्वभर्ता ॥' इत्यादिरूपेण श्रीवैष्ण वमताब्जभास्करे जगद्गुरुश्रीरामानन्दाचार्यचरणोक्तेः। अप्सुजातमब्जम्' जन धातोः 'सप्तम्यांजनेर्डः' इति ड प्रत्ययः। सप्तमीयोगविभागात्समासः। यद्यपि अमरसिंहनिर्मितकोषेऽब्जशब्दश्चन्द्रमापर्य्यायस्तथापिकोषान्तरेऽब्जशब्दः कमलनामपर्य्यायेप्रसिद्धः। नीलञ्चतदब्जञ्चेतिविशेणसमासः। प्रफुल्लञ्चतन्नी लाब्जञ्चेतितथैव सः। तेन समावातुल्यकान्तिशोभा यस्यस तम्। 'तद्गुण संविज्ञानोबहुब्रीहिः' लम्वकर्णवत्। अनेन विशेषणेन समीपागतानांशरणागतानां प्राणिनां प्रसन्नताद्योत्यते यथा तादृशकमलसमीपे समागतानामानन्दोभवति तथा श्रीरामसमीपागतानामपि सम्भवत्येवेति प्रसिद्धमेव वरीवर्ति। श्रीमद्वाल्मीकीय श्रीमद्रामायणे सर्वत्रैवश्रीरामसमीपशरणागतानामानन्दो भवतीति विदितमेवशास्त्र ज्ञ विदुषाम्। भवः संसारः स एवसिन्धुतस्मैतस्मिन् वा पोत इव प्लव इव तम्। अनेनसंसारतः स्वशरणागतानां जननमरणहानिर्बोध्यते। ईदृशं रामं नित्यं सदा नमामि अभिवादयामि। नमस्कार्य्यनमस्कारकभावोभेद एव भवति न हि केवलाभेदे। अनेननमस्कारेणविशिष्टाद्वैतसिद्धान्तोबोध्यते। अत्र प्रत्यवतिष्ठते किं भो? यद्भवताश्रीरामविषये प्रतिपादितमस्मिन् व्याख्याने तद्व्याख्यानन्तुपर ब्रह्मविषयकमेव। परब्रह्मविषयकमेव भवितुमर्हति न हि त्वदभिमतोरामः परब्रह्मवाचकोवेदेषु तन्नामादर्शनात् साधारणार्थवाचकत्वाच्चतस्य। अत्रोच्यते भवत्प्रश्नोगगनकुसुमायमानः प्रतीयते श्रवणगोचरीक्रियतां वेदेषु दरिदृश्यतां तन्नाम तदर्थश्च साधारणो नहि वरीवर्त्ति। तथाहि तदर्थनिरूपणं विधीयते जन्ममरणहेतुकान् सांसारिकजन्यपदार्थानसारान् मत्वा सर्वशुभकल्याणजनके (यतः) इहोपादानकारणसहकारिकारणनिमित्तकारणात्मके श्रीमद्भागवत दश



मस्कन्धप्रतिपादितसत्वगुणविशिष्टे ननु भागवतदशमस्कन्धे भृगुः सत्त्वगुण विशिष्टं विष्णुमेव परीक्षितवान् तर्हि श्रीरामविषयेतत्रत्येतिहासः कथं नियोज्यते इतिचेन्नैवम्। स श्रीराम एव कथं विष्णुशब्दोविशेष्यस्वरूपश्रीरामस्यैव विशेषण वाचकः इतीहैवग्रन्थे वक्ष्यते सप्रमाणम्। कर्तुमकर्तुमन्यथाकर्तुं समर्थे परब्रह्मणि यस्मिन् श्रीरामे योगिनोरमन्ते स रामः। अथवा अनित्यजगद्विषयेषु नानादुःखावहेषु तृणायमानेषु श्रीरामार्थमेव एषणात्रयरहितेषु यत्रेषणात्रयं न हि तत्र श्रीरामविषयकजन्ममरणविनाशकप्रीतिदरीदृश्यते इतितद्रहितेषु निजश रीरानन्दहीनेषु समर्पितस्वशरीरेषु प्रेम्णा रमते यः स रामः। अथवा स्वप्रीतिकर कर्मकर्तॄन् प्राणिनोरमयति आनन्दयति यः स रामः। ननु इहकथं घञन्तेऽपि वृद्धिरितिचेन्नैवं तदन्तरं स्वार्थिकाण् कृते ततोवृद्धिः। अतो नहि साधारणार्थकः श्रीरामशब्दः। सर्वप्रधानप्राणिनिविहिताष्टाध्यायीव्याख्याता श्रीमद्भट्टोजिदीक्षि तोऽपि श्रीरामशब्दमहात्म्यं द्योतयति यत् सत्सुवह्वजन्तशब्देषु प्रथमं श्रीराम शब्दस्यैव प्रयोगं कृतवान्। ननु अमरकोषे श्रीरामशब्दपाठाभावात् कथन्तद्वि शिष्टत्वं स्यान्नैवम्। श्रीरामशब्दविशेषणविष्णुशब्दस्य तत्र पाठोऽस्तीति श्रीरामशब्दस्यापिजात एव पाठोविशेष्यं विना विशेषणस्थित्यभावात्। सर्वसम्मत श्रीमद्वाल्मीकीयश्रीमद्रामायणपञ्चमवेदत्वं वर्तते नहीहकेषामपि विप्रतिपत्तिः। तत्र श्रीरामः परब्रह्मवाचको दृश्यते। 'सीतालक्ष्मीर्भवान् विष्णु रीति' इह विष्णु शब्दः कस्यबोधकः? नहि शिवादेः। तत्र श्रीरामः परब्रह्म-शब्देन शब्दितोबहुस्थले महर्षिणा तत्रैवावलोकनीयः।

'एकोबहुस्यामितिबुद्धिरस्यास्तीति एकबहुस्यामिति बुद्धिमान्तम्' झटिति सर्वजीवशुभाशुभकर्मकृतफलप्रदानपवित्राधिषणमन्तम्। प्रशंसार्थेमतुबि-हास्ति। बुद्धिस्तात्कालिकीज्ञेयामतिरागामीगोचरा। प्रज्ञानवनवोन्मेषशालिनी प्रतिभाविदुः' इति कोषः। अनेन विशेषणेन 'एकोऽहंबहुस्याम' इति श्रुतिर्बोध्य ते। नानेनश्रुतिवचनेनाद्वैतसिद्धिशङ्कनीया तत्रैकपदस्यनामरूपविभागानर्हप रत्वात्। सृष्टेः प्राङ् नामरूपविभागाभावोभवत्येव। तथाहि सृष्टिप्रागवस्थाऽऽपन्ने नामरूपरहिते सूक्ष्मचिदचितौ स्तस्तद्विशिष्टब्रह्मावदति साम्प्रतमहं नामरूपरहि तोऽस्मि यदि सृष्टिकालीनः स्यां तदा मच्छरीरे नामरूपयुक्ते स्यातां तद्विशिष्टोऽह

मपि नामरूपभाक् स्यां मच्छरीरस्य मदनतिरिक्तत्वात् । सृष्टेः प्राग् जीवमाया ब्रह्म चैतत् त्रयमपृथक् सिद्धिसम्बन्धेनावतिष्ठते नहि नामघटादिरूपशुक्ला दिभानं भवति सूक्ष्मावस्थाऽऽपन्नत्वादतो नकोऽपि क्षतिर्वरीवर्ति । सूक्ष्मचि दचिद्विशिष्टं ब्रह्मकारणावस्थं स्थूलचिदचिद्विशिष्टं ब्रह्मैव कार्यावस्थं मन्यते इति विशिष्टाद्वैतिसमयः तदाहुराचार्यसार्वभौमाः 'इदं परिदृश्यमानं विभक्तनाम रूपमनेकावस्थं घटपटादिजगत् अग्रेसृष्टिकालात् पूर्वमेकमेवाविभक्तनामरूप तया एकत्वावस्थापन्नमेवाद्वितीयं कर्तृत्वान्तरकारकरहितं सदैव सदाकारक प्रतीतिविषयतापन्नमेवासीत्' 'ततश्चैकमद्वितीयमिति पदाभ्यामभिन्ननिमित्तो पादानकत्वं सिद्ध्यति । तदयं निर्गलितोऽर्थ इदं प्रत्यक्षादिप्रमाणेन परिदृश्यमानं जगद्विभक्तनामरूपं बहुत्वावस्थं सृष्टेः पूर्वनिमित्तान्तररहितमविभक्तनामरूपतया एकं सच्छब्दशब्दितब्रह्मलक्षणमेवाभवदिति । यद्यपि जगदिदानीमपि सदेव पूर्वमपि सदेव तथापि सृष्टेरनन्तरं विभक्तनामरूपतया सत्, उत्पत्तेः पूर्वन्त्ववि भक्तनामरूपतया सत्वमेतावानेव विशेषः ( छान्दोग्यानन्दभाष्यम् ६।२।१ ) इत्या दिरूपेण । भवः संसारः स एव सिन्धुः सागरस्तस्मै पोत इव नौरिव तम् । अनेन निर्मलमनः स्वशरणागतानां जननमरणहानिर्बोध्यते । तदुक्तं महर्षिवाल्मीकिना-

'सकृदेव प्रपन्नाय तवास्मीति च याचते ।
अभयं सर्वभूतेभ्यो ददाम्येतद्व्रतं मम ॥
कदाचिदुपकारेण कृतेनैकेन तुष्यति ।
न स्मरत्यपकाराणां शतमप्यात्मवत्तया ।'

ईदृशम् रामनिर्मलान्तकरणयोगिहृदयविहारिणं निखिलजगदानन्दयितारं 'राम एव परंब्रह्म राम एव परं तपः । राम एव परं तत्वं श्रीरामो ब्रह्मतारकम्' इत्यादिरूपेण श्रुतिप्रतिपादितम् साकेतविहारिणं नमामि अभिवादये । नित्यं सर्वदा नमस्कार्यनमस्कारकभावो भेद एव भवतुमर्हति नहि केवलाभेदे अनेन नमस्कारेण विशिष्टाद्वैत सिद्धान्तः प्रतिपाद्यते । पुनः कश्चिदिह प्रत्यवतिष्ठते किं भो ! यदस्मिन् व्याख्याने भवता श्रीरामविषये प्रतिपादितं तद्व्याख्यानन्तु परब्रह्मविषयको भवितुमर्हति नहि त्वदभिमतोरामः परब्रह्मवाचकोऽस्ति कथं ?



वेदेषु तन्नामादर्शनात् तस्य साधारणार्थवाचकत्वाच्च । अत्रोच्यते भावत्कः प्रश्नो गगनकुसुमायमानः प्रतीयते किं भो भवता के के वेदा अधीताः इति वक्तव्यम् मया निश्चीयते नहि वेदुषु भवदीयः प्रवेशोऽस्ति यं कमपि वेदभागं पठित्वा स्वीयं जठरं परिपाल्यते येनेत्थं जल्पसि तन्नाम वेदेषु दरीदृश्यतां तदर्थश्च क्रम शोदर्श्यते ।

सामवेदतैत्तिरीयशाखाणाम्

ॐ भृगुर्वै वारुणिर्वरुणं पितरमुपससार अधीहि भगवन् ब्रह्मेति सोऽव्र वीद्राम एव परंब्रह्म रामादन्यन्न किञ्चन यत एते रामादेवोत्पद्यन्ते विलीयन्ते रामादेव स्थितिर्वसति तस्माद्राम एव ब्रह्म । सर्वकारणात् परोविभुः । ( ऋग्वेदे १०।३-३ आग्नि उषा प्रकरणे )

ॐ भद्रो भद्रया सचमान आगात् स्वसारं जारो अभ्येतिपश्चात् ।
सुप्रकेतैर्द्युभिरग्निर्वितिष्ठन्नुशद्भिर्वर्णैरभिरामसमस्थात् ॥

(अथर्वणोत्तरार्द्धगतो मन्त्रः)

ॐ या अयोध्या पुरी सा सर्ववैकुण्ठानां मूलाधारा मूलप्रकृतेः परा तत् सद् ब्रह्म मयीविरजोत्तरा दिव्यरत्नकोशाढ्या तस्यां नित्यमेव सीतारामयोर्विहारस्थल मस्तीति ।

इत्यादिवेदमन्त्रेषु श्रीरामपदं वर्तते । कथमुच्यते भवता वेदेषु राम इति पदं नहि दृश्येतेऽतस्तत्र राम इति पदं दृष्ट्वा स्वस्मिन् स्वान्ते सन्तोषो विधीयताम् श्रीरामशब्दार्थोऽपि नहि साधारणः किन्तु सर्वशब्देभ्यो विलक्षणोऽस्तीति दृश्यताम् ? अथर्ववेदस्थ श्रीरामतापन्युपनिषदः पूर्वार्द्धे-

रमन्ते योगिनोऽनन्ते सत्यानन्दे चिदात्मनि ।
इतिरामपदेनासौ परंब्रह्माभिधीयते ॥ इति ।

श्रीकृष्णसंहितायाः श्रुतिः श्रीकृष्णे जगाद-

ब्रह्मेति पठ्यते स्वामिन् यद्रूपं परमाद्भुतम् ।
तद्रूपं कथयास्माकं त्वं देव परमेश्वर'

तां प्रति श्रीकृष्णः कथयति-

तत्रास्ति मत्कारणमद्वितीयं रामं परं ब्रह्म विशुद्धबोधम् ।
विधीशनारायणशेषपूर्वमहं च तं वर्णयितुं न शक्तः ॥

जन्ममरणहेतुकान् सांसारिकजन्यपदार्थानसारान् मत्वा निखिलकल्याणजनके दिव्यनित्यकर्मानधीनगुणमूर्तिविशिष्टे 'यतो वा इमानि' इत्यत्र यतइतीहोपादानसहकारिनिमित्तकारणात्मके श्रीमद्भागवतदशमस्कन्धे प्रतिपादितसत्त्वगुणविशिष्टे कर्तुमकर्तुमन्यथाकर्तुं समर्थे यस्मिन् परब्रह्मणि श्रीरामे योगिनो रमन्ते स रामः । अथवा अनित्यजगद्विषयेषु तृणायमानेषु एषणात्रयरहितेषु निजशरिरानन्दहीनेषु श्रीरामे समर्पितस्वसर्वपदार्थेषु पवित्रान्तःकरणेषु सत्यदयापरोपकारपरायणेषु प्राणिषु रमते यः स रामः। अथवा श्रुतिस्मृतिविहितशुभकर्मकर्तॄन् सर्वाशामनादृत्यशरणागतान् पवित्रान्तः करणान् सत्यदयापरोपकारनिरतान् प्राणिनो रमयति यः स रामः । पूर्वविग्रहद्वये रम धातो क्रीडार्थकात् 'हलश्च' इति घञ् प्रत्ययः । अन्तिमविग्रहे रमिण्यन्तधातोः पचादित्वादच् प्रत्यये णिलोपः ततः प्रज्ञादित्वादणिबृद्धौ सतिरामः ।

ननु भागवतदशमस्कन्धे भृगुः सत्वगुणविशिष्टं विष्णुमेव परीक्षितवान् तर्हि श्री रामविषयकस्तत्रत्येतिहासः कथं भवता दर्श्यते ? मैवं स विष्णुः श्रीरामाभिन्न एवास्ति। कथं ? तथा हि श्रीरामो विशेष्यः श्रीविष्णुस्तद् विशेषणवाचकोऽस्ति नहि विशेषणविशेष्याद्भिन्नो भवति नीलो घट इतिवत् श्रीरामो विशेष्यवाचकः श्रीविष्णुविशेषणवाचकोऽस्ति । एष निर्णयोऽस्यामेव करिष्यते। पूर्वप्रदर्शितश्रीरामतापन्युपनिषद्वलोकनेन श्रीरामशब्दार्थो विलक्षणः प्रतीयते । प्रदर्शितविग्रहत्रयेणापि श्रीरामशब्दार्थो विलक्षण एवेति नहि त्वदभिमतः साधारणार्थकसर्वेश्वरश्रीरामः प्रदर्शितमन्त्रत्रये द्वयस्यार्थस्पष्टोऽतस्तत्र न प्रयते एकस्य मन्त्रस्यार्थः स्पष्टतया केवलं तस्य पाठेन न प्रतीयतेऽतस्तदर्थं वर्णयामि-

भद्रो भद्रया सचमान आगात् स्वसारं जारो अभ्येति पश्चात् ।
सुप्र केतैः द्युभिरग्निर्वितिष्ठन्नुशद्भिर्वर्णैरभिराममस्थात् ।

भद्रः श्रीरामोनित्याखिलकल्याणाकरः यद्वा सकलजगदानन्दोत्पादकः



भद्रया श्रीसीतया सत्यसकलमङ्गलमूर्त्या आदिशक्त्या सह सचमानो वनगमनार्थं वनोचित वल्कलादिना सज्जमानाः । आगात् देवर्षिकार्यार्थं जनकाज्ञया दण्डकारण्यमगमत् । स्वसारम् । अंगुलयः स्वसारस्तद्वन्तं सीतायाः करम् । ग्रहीतुं जारः परदारापहारको रावणः । पश्चात् । श्रीरामात् परोक्षे अभ्येति आगत इति यावत् 'वर्तमान सामीप्ये वर्तमानवद्वा' इति भूतकाले लट् । ततोरावण सीतां हृतवान् । तां नीत्वास्वस्याशोकवाटिकायां शिंशपपादपमूले स्थापितवान् । ततो रामः सुग्रीवेणसह मैत्रीकृत्वा लङ्कां गत्वा रावणं हतवान् । ततोरावणे हते सति श्रीसीता वह्निं प्रविष्टवती ततो ब्रह्मशिवादिसमुपस्थितौ श्रीरामसमीपे वह्निकरसमर्पिता श्रीसीता अग्निस्वरूपा 'अग्निर्जाया गार्हपत्यम्' इतिश्रुतेः । 'जायासहचरोऽग्निः' अग्निर्देवः सुप्रकेतैः शोभनचिह्नैः 'द्युभिः द्युलोकसाधनभूतैः श्रीरामदारैः सह । उशद्भिर्दीप्यमानैः वर्णैः । लोहितादिवर्णज्वालादिभिः उपलक्षितोऽग्निः । वितिष्ठन्' श्रीरामसन्मुखेतिष्ठन् रामम् । अभ्यस्थात् । श्रीरामस्य सन्मुखं स्थितवान् । छन्दसिपदेऽपि व्यवहितेऽपिचेतिनियमेनाभिपद-स्वव्यवहितेऽपि प्रयोगो न दोषाय भवति । सर्ववेदेषु श्रीरामस्य कथा वर्तते वेदरहस्य दर्शनेनाधिको निश्चयो जायते । तथैवाहुराचार्या रहस्यमार्तण्डभाष्ये

'अथैकेन मन्त्रेण परब्रह्मणो भगवतः श्रीरामस्य श्रीसीता प्राप्तिपर्यन्तं वृत्तं सङ्क्षेपेणाह भद्रः' इति । भद्रः परब्रह्मपदवाच्यः सर्वेश्वरः श्रीरामभद्रः । भद्रया सर्वकल्याणगुणविशिष्टया श्रीसीतया सह । सचमानः सञ्चरन् । आगात् प्राप्तवान् । दण्डकारण्यमित्यर्थवशाद्बोध्यम् । तत्र जारः परस्त्रीलम्पटो रावणः स्वसारं स्वसारोऽङ्गुलयः । लक्षणया तद्वन्तं पाणिपद्मम् । सीताया इत्यर्थाद् बोध्यम् । सीतायाः पाणिं ग्रहीतुमित्यर्थः सीतां हर्तुमिति सारार्थः । पश्चात् परोक्षे । रामादित्यर्थाद्बोध्यम् । अभ्येति आगतवान् । ततस्तत्र सीताया अग्निप्रवेशादारभ्य रावणवधान्ता कथा प्रागुक्तैर्मन्त्रैर्वर्णितोपक्षेप्या । रावणबधानन्तरञ्च । अग्निः श्रीसीतायारक्षणार्थं तत्सहचरोऽग्निः । उशद्भिः दीप्यमानैः । वर्णैर्लक्षणया लोहितादिवर्णैः ज्वालाजालैरुपलक्षितः सन् सुप्रकेतैरुत्तमचिह्नैः शुद्धत्व लक्षकैर्लक्षणैरुपलक्षितैः । द्युभिर्लक्षणया स्वर्गसाधनभूतैः । पत्न्याः सहधर्मचारित्वादिति बोध्यम् । एवं च स्वर्गसाधनैर्दारैरित्यर्थोबोध्यः । रा-

मस्येत्यर्थाद् बोध्यम् । सहार्थो गम्यः । निर्दोषया श्रीसीतया सहेति सारार्थः । राम मभिरामस्य पुरत इत्यर्थः । वितिष्ठन्नस्थादुत्तिष्ठन्नासीत् । अग्निर्निर्दुष्टां श्रीसीता मादाय रामस्य पुरत आगत्य स्थित इति निष्कृष्टोऽर्थः' इति ( वेदरहस्यम् १३३- ऋ. १०।३।३ ) इत्थं वेदचतुष्टयसमवलोकनेनैव श्रीराममहिमाज्ञायते निन्दन्तु नाम वेदानभिज्ञास्तेन किं नश्छिन्नमिति 'स्थालीपुलाकन्यायेनदर्दितमधिकन्तु सर्ववे दादिषु दर्शनीयमिति विरभ्यते ।

सर्वव्याकरणप्रधानपाणिनिविहिताष्टाध्यायीव्याख्याता श्रीमद्भट्टोजिदीक्षि तोऽपि श्रीरामशब्दमहात्म्यं द्योतयति यत् सत्सुवह्वजन्तशब्देषु प्रथमं श्रीराम शब्दस्यैवोदाहरणं दत्तवान् । ननु अमरकोषे श्रीरामशब्दपाठाभावात् कथं श्रीरा मस्य वैशिष्ट्यं भवितुमर्हति मैवं वद श्रृणु यद्यमरकोषे श्रीरामशब्दपाठो नास्तीति तव भ्रमः । तत्र यदि श्रीविष्णुशब्दपाठोऽस्ति तर्हि श्रीरामशब्दस्यापिपाठो जात एव तत् कथं तथाहि श्रीरामो विशेष्य वाचकः । श्रीविष्णुः विशेषणवाचकोस्ति यदि विशेषणवाचकस्य तत्र पाठोऽस्ति तर्हि विशेष्यवाचकस्यापि तत्रपाठो जात एव नहि विशेष्यं विना विशेषणस्यस्थितिर्मभवितुमर्हति । निर्णयोऽयं स्यादस्या मेवटीकायाम् । सर्वसम्मतश्रीमद्वाल्मीकीयश्रीमद्रामायणस्य पञ्चमवेदत्वं वर्तते न केषाञ्चिदत्र विप्रतिपत्तिर्वरीवर्ति तदुक्तमगस्त्यसंहितायाम् 'तस्माद्रामायणं देवि वेद एव न संशयः' तत्र श्रीरामः परब्रह्मवाचको दृश्यते । तथाहि 'सीता लक्ष्मीर्भवान् विष्णुः' इह विष्णुः कस्य वोधकोऽस्ति नहि शिवादेः' किन्तु श्रीरामस्यैव वोधकस्तत्र श्रीरामायणे महर्षिणा बहुलस्थले श्रीरामः परब्रह्म शब्देन कथितोवर्तते । तत्रैवावलोकनेन प्रतीयते । 'परं ब्रह्म परं सत्यं परं ज्ञानं परं तपः । परं बीजं परं क्षेत्रं परं कारणकारणम्' ( श्रीमद्रामायणम् ५।२७।२६ ) इत्यतः श्रीराम एव परब्रह्म वाचको नान्यः कश्चिदस्तीति नः सिद्धान्तः । तदुक्तवन्तः जगद्गुरवः श्रीरामानन्दाचार्याः श्रीमदानन्दभाष्ये 'ब्रह्मशब्दश्चमहापु रुषादिपदवेदनीयनिरस्ताखिलदोषमनवधिकातिशयासंख्येयकल्याणगुणगणं भगवन्तं श्रीराममेवाह । सामान्यवाचकानां पदानां विशेषार्थे पर्यवसानात् । तदाह वृत्तिकारः 'विशेषार्थेन सामान्यार्थोऽवसीयत इति ( वो.वृ. ) ( आनन्द



भाष्यम् १।१।१ ) इति । किं बहुना अथर्ववेदीयपूर्वश्रीरामतापन्युपनिषदि श्री रामः परब्रह्म शब्देनामिहितस्तथा हि 'रमन्ते योगिनोऽनन्ते सत्यानन्दे चिदात्मनि । इति रामपदेनासौ परंब्रह्माभिधीयते' इति श्रीमद्वाल्मीकीयसंहितायामपि श्रीरामः परब्रह्मशब्देन शब्दितस्तथाहि 'श्रीरामः स परंब्रह्म जानक्या सहितः प्रभुः' इत्यादिना । ननु श्रीरामः परब्रह्म शब्देन प्रतिपाद्यते तत्तु न समीचीनं वेदेषु तन्नामादर्शनात् । यथा यजुर्वेदे 'नमः शिवाय च' इत्यादि 'इदं विष्णुर्विचक्रमे' 'त्र्यम्वकं यजामहे' इत्यादिशिवविष्णुनामदृश्यते यजुर्वेदे 'श्रीराम' न दृष्यते इति शङ्कातु शशशृङ्गायमानां वर्तते पूर्वमेव तन्नामवेदादिषु दर्शितं तत एव सन्तोषः क्रियताम् । 'ॐ या अयोध्या पुरी इति भृगुवैर्वरुणं पितरमुपससार' इति 'भद्रो भद्रया' इति यजुर्वेदे प्रतिपादितं श्रीरामपरकं ज्ञेयम् । यजुर्वेदे धनुरङ्कनमाहात्म्यं प्रतिपाद्यते धनुर्धरस्तु श्रीराम एवास्ति नहि शिवादिः । 'धन्वना अङ्किता' इत्या दिना वक्ष्वतेऽतोज्ञायते श्रीरामः सर्ववेदप्रतिपादितः । निजभक्तिभाजां शिवं कल्याणं करोति इति शिवयति 'तत्करोति तदाचष्टे' इति स्वार्थेणिच् टिलोपः । शिवयतीति 'शिवः श्रीरामः' इति कथमर्थो न भवितुमर्हति कः सहृदयोऽत्र व्याख्याने नितरां कुचोद्यं कुर्यान्न श्रद्दध्यात् । अस्तु स्वकीयं पक्षं यथाकथञ्चिद् युक्त्वा स्थापयेदिति विदुषां परामर्शः । कथम्मदीयाव्युत्पत्तिर्व्याकरणसंमता कटुकायते भवतां भवत्पक्षेऽपि मदीया विप्रतिपत्तिः स्यात् । यश्चोभयोः समो दोषः परिहारोऽपि वा समः । नैकः पर्यनुयोक्तव्यस्तादृगर्थविचारणे ॥ इति न्यायस्तुसमान एव । तिस्त्रो मातरोऽम्वा यस्य श्रीरामस्य स त्र्यम्वकः श्रीरामः कथं न भवितुम्मर्हति मदीयं व्याख्यानं समीचीनं यदि ते न प्रतिभातितर्हि त्वदीयं व्याख्यानं ममापि न प्रतिभाति 'त्रयाणां ब्रह्मविष्णुरुद्राणामम्वकं पितरं यजायहे इति शिष्यसहितो वशिष्ठो प्रवीति' इति भाष्यकारोक्तेः ।

तथैव महांश्चासौदेवो महादेवः । महांश्चासावीश्वरो महेश्वरः श्रीरामः कथन्न भवितु मर्हति कश्चात्र विवादः ? इदं विष्णुर्विचक्रमे' इत्यादौनोऽस्माकं कापि क्षतिः । श्रीविष्णुः शब्दः श्रीरामस्य विशेषणवाचकोऽस्तीति इहैव वक्षते । नहि विशेष्यमन्तरेण विशेषणस्य स्थितिर्भवितुमर्हतीति भो नविवदितव्यमधिकं कुचोद्यतया तस्मात्सिद्धं श्रीरामस्य परब्रह्मवाचकत्वमिति संक्षेपः ॥१॥

※ श्रीजानरायभगवते श्रीरामाय नमः ※

卐 श्रीहनुमते नमः 卐

※ प्रस्थानत्रयानन्दभाष्यकाराय नमोनमः ※

कविरत्न पण्डित श्रीईश्वराचार्यप्रणीता

## 卐 विभा हिन्दी टीका 卐

**अवतारिप्रभुं रामं वेदज्ञानं दयानिधिम् ।**
**प्रणमामि जगद्योनिमिच्छा मे सफला भवेत् ॥**

जगद्गुरु श्रीकेवलरामाचार्यजी सर्वजनकल्याणकारी प्रबोधरत्नमाला प्रबन्ध निर्माण के प्रारम्भ में अपने इष्टदेव सर्वावतारी सर्वेश्वर श्रीरामजी को प्रणाम करते हैं-सुरेशों से पूजित श्रीचरणकमलवाले प्रफुल्लित नीलकमल के समान कान्तिवाले अभी मैं एक हूँ बहुत हो जाऊँ इसप्रकार संकल्प करनेवाले अर्थात् सृष्टि से पहले प्रलयकाल में नाम तथा रूपसे रहित मैं एक ही दिखाई देता हूँ वह मैं नाम तथा रूप के व्यवहार योग्य बहुत हो जाऊँ इसप्रकार से सृष्टि के आदि काल में संकल्प करनेवाले संसार रूप समुद्र से पार उतारनेवाले नौकारूप श्रीरामजी को मैं सर्वदा नमन-सादर दण्डवत प्रणाम करता हूँ ॥१॥

**रामानन्दः प्रकृतितनुभृद् ब्रह्ममन्तात्रिदण्डम्**
**काषायं यः श्रुतितनुपटं धारयन् ब्रह्मसूत्रे ।**
**गीतायां वा उपनिषदिसमे दिव्यमानन्दभाष्यम्**
**कुर्वन् भक्तिं जयति भुवने तं स्तुवे संवितन्वन् ॥२॥**

**ग्रन्थकर्ता गुरुर्ब्रह्मा गुरुर्विष्णुरिति शास्त्रवचनमवलम्ब्य परमश्रीगुरुं स्तौति । तनुं शरीरं विभ्रतीति तनुभृतो जीवाः । प्रकृतिश्च तनुभृच्च ब्रह्म चेति समाहारद्वन्द्वः । तन्मन्यते स्वीकुरुते इति प्रकृमितनुभृद् ब्रह्ममन्ता । त्रयाणां दण्डानाम् समाहारस्त्रिदण्डम् तत् । पात्रादित्वात्स्त्रीत्वाभावः 'त्रिफलमिति त्रिफलेतिवद्वा । श्रुतिषु वेदेषु नुतोवन्दितः श्रुतिनुतः स चासौपटश्चेति तम्' कषायेण रक्तः पटः काषायस्ताम् । काषायं श्रुतिनुतपटं वस्त्रं धारयत् दधत् । न लोकेति कृद् योगषष्ठिनिषेधः । ब्रह्मणः सूत्रं ब्रह्मसूत्रन्तस्मिन् जातावेकवचनम् । समेसम्पूर्णे उपनिषदि जातावेकवचनम्' परब्रह्म श्रीरामबोधकनाना दुःखावह**



**सांसारिकजन्यभोगानासक्तिसूचकवेदोत्तरभागस्थमन्त्रचये गीतायाम् वै निश्चयार्थकोऽव्ययः । दिव्यं सुन्दरम् आनन्देन विशिष्टम् आनन्दविशिष्टं तच्च तद् भाष्यम् आनन्दभाष्यन्तत् शाकपार्थिवत्वान्मध्यमपदलोपी विशेषणसमासः । करोतीति कुर्वन् विदधत् । इहापि षष्ठीनिषेधः पूर्ववत् भुवनेजगति भक्तिम् संवितन्वन् सम्यग्विस्तारयन् । भुवने किम् तत्रत्य जनेषु कलिङ्गः साहसिक इतिवल्लाक्षणिकपदमिदम् । जातावेकवचनम् । यः रामस्यानन्दो यस्मादसौ रामानन्दः । अथवा रामानन्दो यस्य स रामानन्दः । विशिष्टाद्वैतसमयश्रीसम्प्रदायकमलगगनमणिः' एतेन यः कश्चिदन्यस्तन्नामधारी तस्य व्यावृत्तिः सूचितेति विज्ञेयम् । जयति सर्वोत्कर्षेण वर्तते तम् 'अहम्' स्तुवे नौमि । ननु रामानन्दः किं कस्यचिद्देवस्यांशोवर्तते यत् तेन किल भवदभिमतसिद्धान्तसम्प्रदायकमल दिवाकरत्वम्प्राप्तम् ? उच्यते नहि कस्यचिदेवस्यांशः किन्तु साक्षात् परब्रह्म श्रीराम एव स वर्तते तदुक्तमगस्त्यसंहितायाम् 'रामानन्दः स्वयं रामः प्रादुर्भूतो महीतले' इत्यादि । यदि स स्वयं रामो न स्यात् कथं तस्य ब्रह्मसूत्रादिषु विशिष्ट बुद्धिमत्ता सूचकम् 'आनन्दभाष्यम्' प्रेक्षावदभिमतपदवाक्यप्रमाणरहस्यघटितं भवितुमर्हति । दरीदृश्यतां श्रीवाल्मीकिसंहितायामपि तथ्यमुक्तमस्ति-**

'यदा यदा हि धर्मोऽयं विष्णोः साकेतवासिनः ।
कृशतामेति भो देवि ? तदा स भगवान् हरिः ॥
रामानन्दयतिर्भूत्वा तीर्थराजे सुपावने ।
अवतीर्य्य जगन्नाथो धर्मं स्थापयते पुनः ॥' ॥२॥

प्रकृति माया जड़ चेतन जीव तथा ब्रह्म श्रीरामजी इन तीनों को सत्य मानने वाले प्रकृति शब्द से एक सांख्यों की प्रकृति एक प्रभु श्रीरामजी का शरीर जड चेतनात्मिका प्रकृतियां दो हैं पर यहां सांख्यों की प्रकृति का ग्रहण नहीं है । वेद विहित त्रिदण्ड को तथा काषाय वस्त्र को धारण करते हुए 'ब्रह्मसूत्रों में सुख पूर्वक तथा गीता तथा उपनिषदों में सुन्दर आनन्दभाष्य को बनाते हुए जगत् में भक्ति को सम्यक् प्रचार करते हुए सब तरह से सर्वश्रेष्ठ हो के वर्तमान हो रहे हैं ऐसे महापुरुष सर्वशक्ति सम्पन्न विशिष्टाद्वैतवादी जगद्गुरु श्रीरामानन्दाचार्यजी हैं उनको मैं केवलरामकूवाचार्य स्तुति करता हूँ । यहां ब्रह्मसूत्रे इत्यादि में जाति के अभि प्राय से एकवचन

किया गया है यह बुद्धिमत्ता है। हमारे परमपूज्य जगद्गुरु श्रीकेवलराम कूबाचार्यजी प्रथम श्लोक में प्रलयकालीन परब्रह्म का यह संकल्प है एकोऽहं बहुस्याम् प्रजायेय इत्यादि श्रुतिप्रसिद्ध परब्रह्म श्रीरामजी का नमस्कारात्मक मङ्गल किए हैं। तथा प्रकर्प विशिष्टाद्वैतवादी जगत् तथा जीव परब्रह्म ये तीन सत्य है हां प्रलयकाल में यह देव है यह मनुष्य है यह पशु है यह वृक्ष नदी पर्वत है काला गोरा मोटा पतला ऐसे नाम रूप है नहीं प्रतीत होते हैं। नाम रूप विभाग रहित सूक्ष्म रूप से अपृथक् सिद्धि सम्बन्ध से सभी जड़चेतन पदार्थ ब्रह्म में रहते हैं। सृष्टि काल में यह देव है यह मनुष्य है इत्यादि नाम यह मोटा है यह पतला है यह काला है यह गोरा है ऐसे विभाग युक्त ब्रह्म में रहनेवाले जड़चेतन पदार्थ शरीरवाले परब्रह्म श्रीरामजी का तथा द्वितीय में आचार्य जगद्गुरु श्रीरामानन्दाचार्यजी का नमस्कारात्मक मङ्गल किए हैं ॥२॥

**सायुज्यमुक्तिं यदि वाञ्छतिप्रभोस्तापत्रयाम्भोजविधुंसुमानवः ।**
**रामस्यभक्तिं ध्रुवशान्तिकारिणीं संवित्स्वरूपां सततं करोतु सः ॥३॥**

मायिमते ज्ञानादेव सर्वानर्थनिवृत्तिपूर्वकपरमानन्दावाप्तिर्मोक्षोमन्यते विशिष्टाद्वैतेऽस्मन्मते श्रीरामानन्यप्रपत्त्यैव सायुज्यमोक्षोमन्यते । अस्मन्मते भक्तिशब्दो ज्ञानशब्दस्य पर्यायवाचकोऽस्तीति स्वीक्रियते 'सा च भक्तिः परमप्रेयो भगवदितरवैतृष्ण्यपूर्वकपरमपुरुषानुरागरूपो ज्ञानविशेष एव' (आनन्दभाष्यम् १।१।१) इत्याचार्योक्तेः 'सकृदेव प्रपन्नाय' 'भक्त्यात्वनन्ययाशक्यः' इत्यादिप्रमाणेन श्रीवैष्णवसमये भगवद्भक्त्यैवसर्वं कल्याणं भवतीति स्वीक्रियते तमेव प्रकारं स्वाभिमतं श्रीमदाचार्याः श्रीस्वामिकूबाचार्यमहाराजाः दर्शयन्ति-'यदि चेत् 'यः' यत्तदोर्नित्यः सम्बन्धः । मनोरपत्यं पुमान् मानवः शोभनश्चासौ मानवश्चेति सुमानवः सभ्यमनुष्यः । त्रयोऽवयवा यस्य तत् त्रयम् । तापानामाध्यात्मिकाधिदैविकाधिभौतिकानां त्रयम् तापत्रयम् । आध्यात्मिकः' तापः मानसिकाधिविशेषः । आधिदैविकः इन्द्रादिदेवयमादिजन्यः । आधिभौतिकः मनुष्यसर्पादिजन्यः अम्भसिजातम् अम्भोजं कमलम् । तापत्रयमेवाम्भोजम् तापत्रयाम्भोजम् तस्मै विधुरिव ताम् । यथाविधुः कमलवनं सङ्कोचयति तथा सायुज्यमुक्तिः तापत्रयं संकोचयति नाशयतीति यावत् 'सायुज्या चासौ-मुक्तिश्चेति ताम् । जगद्व्यापारं वर्जयित्वा यावत् सुखं परब्रह्मणो भवति



**तावत्सुखं मुक्तजीवस्य भवतीति तदर्थः । वाञ्छति कामयते तर्हि स प्रभोः कर्तुमकर्तुं समर्थस्य सर्वेश्वररामस्य ध्रुवस्य शान्तिः ध्रुवशान्तिः** (निर्वाणपदवी) **तां करोति निस्पादयतितच्छीलेति ध्रुवशान्तिः कारिणीताम्' सम्विदोज्ञानस्यस्वरूपमिव स्वरूपं यस्याः सा ताम् । ज्ञानाभिन्नमितियावत् । भक्तिंश्रवणकीर्तनस्मरणपादसेवनार्चनवन्दनदास्यसख्यात्मनिवेदनात्मिकाम् सततं** निरन्तरं यथा स्यात् **तथा करोतु विदधातु ॥३॥**

जो पुण्यात्मा मनुष्य सायुज्यमुक्ति को चाहता है तो वह मनुष्य आध्यात्मिक, आधिभौतिक आधिदैविक ये तीन तरह के तापरूपों कमल के लिए चन्द्रमा रूपी सच्चे भक्तों के नित्य सामर्थ्य को बढानेवाली ज्ञान स्वरूपा कर्तुमकर्तुमन्यथाकर्तुं समर्थ प्रभु श्रीरामजी की उक्त विशेषण विशिष्ट भक्ति को सच्चे मनवाला होके करें। अवशेन्द्रियचित्तानां हस्तिस्नानसमक्रिया ऐसे मन वचन कर्मवाले मनुष्यों की सभी क्रिया निष्फल होती हैं यह खूब ध्यान में रखे प्रभु भक्तिवाला मनुष्य ही सफल होता है। विशिष्टाद्वैत सिद्धान्त में भक्ति तथा ज्ञान इन दोनों को अभेद माना गया है। श्रीकात्यायनमुनिजी लिखे हैं-क्लिपि सम्पद्यमाने च । भक्तिर्ज्ञानायकल्पते रूपेण परिणमते यहां भक्ति और ज्ञान का अभेद प्रतिपादन है। आनन्दभाष्यकार जगद्गुरु श्रीरामानन्दाचार्यजी ने भी-सा च भक्तिः परमप्रेयो भगवदितर वैतृष्ण्यपूर्वक परमपुरुषानुराग रूपो ज्ञानविशेष एव' (आनन्दभाष्य १।१।१) ऐसा प्रतिपादन कर दोनों की एकता बतलाई है ॥३॥

**समस्तवेदतत्वज्ञं दान्तं वैराग्यभाजनम् ।**
**दयासमन्वितं शश्वत्परोपकारशालिनम् ॥४॥**
**श्रीवैष्णवं लब्धसुराममन्त्रं गत्वाविरक्तं मनुजः सुखार्थी ।**
**शान्तं गुरुंस्वात्मविशुद्धतायै वर्षत्रयन्तस्य जुषं विदध्यात् ॥५॥**

**श्रीवैष्णवदीक्षाप्रकारं दर्शयन्ति मान्यतमाः समस्ता** निखिलाश्च ये वेदास्तेषां तत्त्वं सारं जानातीति **समस्तवेदतत्त्वज्ञस्तमववोधनार्थकज्ञाधातोः** 'आतोनुपसर्गे कः' इति कर्तरिप्रत्ययः रञ्जनं रागः **विगतश्चासौ** रागश्चविरागः । नात्रविशेषश्चासौ रागश्चेति विराग इति समासः **समीचीनः** । विरक्तपदविरोधात् । ननु

तत्रापि विशेषश्चासौ रक्तश्चेति समासविधाने विरोधाभाव इति मैवं ग्रन्थकर्तुरभि प्रायाभावात् । दान्तशान्तपदविरोधाच्च । ननु जनकादयो निर्वाणपदविं गतवन्तः किं ते भवदभिमतविरक्तपदभाज आसन् । अत्रोच्यते । सत्यमुक्तं तथापि ग्रन्थ कर्तुरभिप्रायो नहि तादृशोऽस्मत्पथ एव ज्यायान् । ननु भवतु ग्रन्थकर्तुरभिप्राय विरोधः किन्तेनास्माकं नष्टं ग्रन्थकर्त्ता नास्त्यस्मन्मान्यः येनास्माकं तत् सिद्धा न्तेऽभिनिवेशः स्यादिति चेन्मैवम्, नहि कुचोद्यं विधेयम् । जनकादयोदान्ताः शान्ताः समस्तवेदरहस्यज्ञा आसन् ते निर्वाणपदवीं गतवन्तोऽपिसन्ति तथापि तत्पक्षपाती भवानेवं प्रष्टव्यः किन्तेऽपि श्रीराममन्त्रपरम्पराप्रचारयितृणां गणना यां गणिताः सन्तीति केऽपि विद्वद्धुरीणाः श्रीवैष्णवा विरक्ताः प्रसिद्धाः स्वी कुर्वन्ति नहि चेत्पश्यन्तु तत्परम्पराप्रचारयितृव्यवस्था स्थाप्यते ग्रन्थकर्त्ता ह्यतो भवत् प्रश्नः शशशृङ्गायमानः प्रतिभाति । विरागस्य भावो वैराग्यं विरक्तता तस्य भाजनं स्थितिपात्रं तत् । दयया समन्वितस्तम् शश्वत्सदा परेषामुपकारः परो पकारस्तेन शालते शोभते परोपकारशालितम् दान्तम् जितेन्द्रीयम् । वेवेष्टि सर्वत्र व्याप्नोति इति विष्णुः सर्वव्यापकः श्रीरामचन्द्रस्तस्मिन् भक्तिरस्ति यस्य स वैष्णवः । विष्णुशब्दात् भक्तिरिति सूत्रेणाण् प्रत्ययः श्रिया विशिष्टः श्रीविशिष्टः सचासौ वैष्णवश्चेति मध्यमपदलोपिविशेषणसमासः । रामस्यमन्त्रो राममन्त्रः शोभनश्चासौ राममन्त्रः सुराममन्त्रः तारकत्वात् तस्य शोभनत्वं वरीयः सुराम मन्त्रः लब्धोयेन स तम् विरक्तम् । संसृतिजन्योभयलोकदुःखकरविषयेषु तृणा यमानम् आशक्तिरहितं वा । शान्तत्वगुणविशिष्टम् । गुरुम् यथार्थोपदेष्टारं गत्वा लब्ध्वा ऐहिकामुष्मिकक्षेमकरं सुखम् अर्थयते इति सुखार्थी मनुजो मनुष्यः स्व स्यात्मा अन्तःकरणं तस्य विशुद्धता तस्यै वर्षाणां त्रयं वर्षत्रयं तत् । अत्यन्त संयोगे द्वितीया तस्य गुरोः जोषणं जुट् सेवाताम् प्रीतिसेवनार्थकजुषधातोः सम्प दादित्वात् भावे क्विप् प्रत्ययः । विदध्यात् कुर्यात् विरक्तश्रीवैष्णवीदीक्षां ग्रही तुमागतस्य मनुजस्य त्रीवर्सपर्यन्तं परीक्षाकर्तव्या किमयं सर्व सहिष्णुः स्यान्न वेति कठिनोयं विरक्तश्रीवैष्णवमार्गस्तं गत्वाऽयमितस्ततो विचलेन्नेति सर्वकृत्यं वोधयित्वा तमेवं वदेत् नहि मदीयोऽभिनिवेशो यदिमं मार्गन्त्वं गृह्णीया यदित वेच्छाऽस्ति तदनुगुणवर्तनस्य तदा तं गृह्णीया इति बोधयेद् येन मध्ये विचलनं



नहि भवेत् । इति हेतोरुक्तं श्रीमदाचार्यवरेण वर्षत्रयं गुरुसेवनं ततस्तद् ग्रहण मिति ॥४-५॥

गुरु करिए जान के जल पीजीए छान के इस कथन के अनुसार दो श्लोकों से करने योग्य श्रीगुरुजी के लक्षण कहते हैं ऐहिक तथा पारलौकिक सुख को चाहने वाला मनुष्य समस्त वेदों के रहस्य को जाननेवाले तथा भीतर और बाहर की इन्द्रि यों को वश में करनेवाले सांसारिक विषयों के त्याग के पात्र तथा दया से युक्त दयालु हमेशा दूसरों की भलाई चाहनेवाले विरक्त मिलते हुए भी सांसारिक विषयों को सर्वथा त्यागनेवाले सच्चे त्यागी विरक्त श्रीगुरुजी से विधिपूर्वक श्रीरामतारक मन्त्र को ग्रहण करनेवाले श्रीवैष्णव तथा शान्त स्वभाववाले श्रीगुरुजी के पास जाकर के अपने अन्तःकरण की शुद्धि के लिए उन श्रीगुरुजी की सेवा करनी चाहिए तीन वर्ष तक लगातार सेवा करने पर ही संसारी मनुष्य शुद्ध होता है । शिष्य होने की इच्छा से आए हुए व्यक्ति विशेष को ३ वर्ष तक विरक्त शिष्य नहीं बनाना चाहिए जब समझ में आ जावे की हाँ यह विरक्त मार्ग को कलङ्कित नहीं करेगा तभी विरक्त दीक्षा देनी चाहिए ऐसे नहीं । नहीं तो 'हाट के गुरु वाट के चेला होय नरक में ठेलम ठेला' कहावत चरितार्थ हो जाएगी । विरक्तमार्ग तलवार की धार के अनुसार है । नहीं तो उभयतः भ्रष्ट होना पडेगा । विरक्त आश्रमोचित नियम पालन करते हुए नहीं रहा जा सके तो गृहस्थ आश्रम ही ठीक है । 'वने गतस्य यदि कामरागता गृहा श्रमः किं न करोत्यवद्यम्' यह श्रीसम्प्रदाय के ७वें आचार्य श्रीव्यासदेवजी का वचन इसका अनुमोदन करता है ॥४-५॥

**सौम्यं समित्करं शिष्यं वीक्ष्य तस्य भवच्छिदे ।**<br>
**गोशफप्रमितां दिव्यां शिखां विना बुधो गुरुः ॥६॥**<br>
**कारयित्वा ततः क्षौरं स्नपयित्वा विधानतः ।**<br>
**शिष्यं सुसत्वसम्पन्नं नव्यवस्त्रोपवीतिकम् ॥७॥**<br>
**श्रुतिमन्त्रैश्चसम्मार्ज्यदत्वा रामपदोदकम् ।**<br>
**तत्तस्मै बोधयित्वा सद् धर्मवाक्यं यथाविधि ॥८॥**<br>
**भगवत्संमुखे वेदीं कृत्वा हुत्वा शुभे तिथौ ।**

श्रीराममन्त्रतः सम्यक् पञ्चामृते धनुः शेरौ ॥९॥
स्नापयित्वा ततस्तस्य शुद्धेऽग्नौ तापयेज्जले ।
तप्तधनुः शराभ्याञ्च स्वङ्कयेद्वाहुमूलके ॥१०॥

वुधो निखिलशास्त्ररहस्यस्वसम्प्रदायमर्मस्यकृत्यज्ञः गुरुस्तत्वं गृह्णाति वो धयतीति गुरुः शब्दार्थकगृधातोरौणादिक उक् प्रत्ययः । यद्वा शिष्याबोधं गिरति ग्रसति इति गुरुः । मयैवात्यत्रोक्तम् तत्वं गृह्णाति यदि वा गिरत्यवोधमिति व्युत्प त्तिकद्वयदिशा गुरुशब्दसिद्धः । सौम्यं सरलस्वभावम् समिध आहवनीयशम्यादि काष्ठानि करे हस्ते यस्य स तम् सप्तमीविशेषणे बहुब्रीहाविति प्रमाणेन व्यधि करणपदो वहुब्रीहिः शाशितुं योग्यः शिष्यस्तम् वीक्ष्यावलोक्य तस्य शिष्यस्य भवस्य छित् भवच्छित् तस्यै । जन्ममरणदुःखदसंसृतिविनाशाय छिद् धातो सम्प दादित्वाद्भावे क्विप् प्रत्ययः गोः धेनोः शफम् खुरः गोशफम् गोशफस्य प्रमिता तत्प्रमाणा गोशफप्रमिता ताम् दिव्यां सुन्दराम्वर्तुलाकारां शिखां विना वर्जयित्वा तस्य शिष्यस्य क्षौरं कारयित्वा तस्येतिततस्तस्य विधेरन्तरं विधानेतिविधानतः उभयत्राप्याद्यादित्वात् तसिः । स्नापयित्वा स्नानं कारयित्वा । सत्वेन सम्पन्नः सत्व सम्पन्नस्तम् सत्वगुणविशिष्टम् वस्त्राणि चोपवीतञ्चेति समाहारो वस्त्रोपवीतं नव्यं वस्त्रोपवीतं यस्य स तम् च पुनः श्रुतीनां वेदानां मन्त्रास्तैः । तं शिष्यं सम्मार्ज्य रामस्यपदे तयोरुदकं तस्मै शिष्याय दत्वा धर्मस्य वाक्यं धर्मवाक्यं तत् सद् धर्म वाक्यं यथा विधिविधिसहितम् विधिमनतिकम्येतियथाविधि तत् अव्ययिभाव समासः, तं शिष्यं बोधयित्वाशिक्षयित्वा भगवतः श्रीरामचन्द्रस्य सन्मुखं भग वत् सन्मुखं तस्मिन् ननु भगशब्दः स्त्रीयोनिवाचकस्तद्वान् भवदिष्टः श्रीराम इत्य होकीदृशोपहासजनकः शब्दोऽयमिति नास्तिककूपमण्डुकशद्दश ? नहि ज्ञायते त्वया तच्छब्दस्य माहात्म्यमन्यद् वर्तते तद्वान् मदिष्टश्रीराम इत्युपहासावकासाभा वः । तथाहि-ज्ञानशक्तिबलैश्वर्यवीर्यतेजांस्यशेषतः' इत्युक्तदिशा भगं षडैश्वर्य्या दिकमस्ति यस्य स भगवान् प्रशस्तषडैश्वर्यवान् प्रशंसार्थेमतुप् ज्ञेयः । भूमनिन्द प्रशंसासुनित्ययोगेऽतिशायने । सम्बन्धेऽस्ति विवक्षायां भवन्ति मतुवादयः । इति नियमः । वेदीं कृत्वा शुभेतिथौ श्रीराममन्त्रेण इति श्रीराममन्त्रतः । आद्यादित्वात् तसिः सम्यक् विधिवत् हुत्वा पञ्चामृतेधनुश्चशरश्चेतीतरेतरयोगेद्वन्दो धनुः शरौ तौ



स्नापयित्वाततः शुद्धे जले स्नपयित्वा अग्नौ तापयेत् च पुनस्तदनन्तरम् तप्तधनुः शराभ्यान्तस्य शिष्यस्य वाहोर्मूलके स्वार्थेकन् प्रत्ययः ते सुष्टुसावधानतया अङ्क येत् चिह्नयेत् ॥६-१०॥

इन श्लोकों से शिष्य करने का विधान वर्णित है । विद्वान् गुरुजी संसार मे विरक्त होने का इच्छा से शरणों में आये हुए उस शिष्य के जन्म मरण मिट जाने के लिए सभ्य विनीत हाथ में होम के लिए शमी की समिधा लिए हुए शिष्य को देखकर तीन वर्ष तक सेवा करनेवाले अनुकूल है ऐसे विचार के गौ के खुर वरावर वीच शिर के ऊपर सुन्दर शिखा को छोड़ के क्षौर तथा विधिपूर्वक स्नान करा के नवीन वस्त्र तथा नवीन यज्ञोपवीतवाले सत्त्वगुण से युक्त शिष्य को ।

फिर वेद मन्त्रों से शुद्ध करके श्रीरामजी का चरणामृत उसको देकर विधि पूर्वक विद्वान् गुरुजी उस शिष्य को धार्मिक सदाचारादि पूर्वाचार्यों के उपदेश वाक्यों को ठीक से समझाए कि भाई भगवत् शरणागति ग्रहण करने के लिए अपनी इच्छा से ही यहाँ मेरे पास आए हो जिज्ञासु बनके कि मैं अपनी इच्छा से आप से विरक्त दीक्षा लेना चाहता हूँ मैं यह दीक्षा लेकर के इसके नियमों को विधिपूर्वक पालन कर सकूंगा आप मुझे विरक्त श्रीवैष्णवी दीक्षा दीजिए । सद्धर्मवाक्य यह है कि इस विरक्त मार्ग पर आके इसके अनुकूल नहीं रहने से माता पिता गुरु इन तीन कुल में कलङ्क लगता है स्वयं पतित होके नरक में पडता है । जिस देव का मन्त्र गुरुजी से लिया जाता है उसका त्याग किसी हालत में करना धर्म विरुद्ध है । इसलिए मन्त्र का प्रतिदिन कुछ न कुछ जप करना आवश्यक है नहीं तो मन्त्र लेना व्यर्थ है मन्त्र जप तभी फल दे सकेगा जब मन पवित्र करके जपता है नहीं तो हाथी के स्नान के तरह वह जप है कुछ फल नहीं होता है ।

शुभ तिथि चौथ चौदश रहित में भगवान् के सामने सुन्दर चार कोण का वेदी को बना करके विधिपूर्वक पूजन करके श्रीरामतारक षडक्षर मन्त्र से विधि के सहित होम करे तब पञ्चामृत में धनुष् बाण को स्नान करवा के तब शुद्ध जल में स्नान करवा ले तब धनुषबाण को शुद्ध उस होम की अग्नि में तपाना चाहिए । तब शिष्य के दाहिने हाथ में बाण से और वाये हाथ में धनुष से बहुत सावधानी से हाथों के मूल में चिह्न करना चाहिए ॥६-१०॥

सुद्वादशोर्ध्वपुण्ड्रांश्च रक्तश्रीभूषितान् किल ।
विदध्यात् तिलकान् पश्चात् तुलसीमालीकां शुभाम् ॥११॥
दध्यात् षडक्षरं मन्त्रं श्रीरामस्य भवच्छिदम् ।
तदर्थं तद्विधिश्चापि बोधयेत् त विधानतः ॥१२॥

युग्मम् 'गुरुरितिशेषः' शिष्यललाटादिद्वादशाङ्गेषु इतिशेषः वेदादिविदुषो गुरोरेव शिष्यद्वादशसंस्कारविधानात् । द्वाभ्यामधिकाद्व्यधिकास्ते च ते दशश्चेति द्वादशमध्यमपदलोपिविशेषणसमासः । शोभनाश्चेति द्वादशश्च इति सुद्वादशप्रादि समासः 'तान् सुद्वादशः' रक्ताचासौ श्रीश्चेतिरक्तश्रीस्तयाभूषितानलंकृतान् । उर्ध्वम् पुण्ड्रमाकारोयेषान्तेतान् । श्रीचीत्रकूटपर्वतोत्पन्नश्वेतमृन्निर्मितान् तिल कान् । तिलकशब्दः पुंनपुंसकयोर्वर्तते । यद्यपि तिलकशब्दः साहित्ये श्रृङ्गारपर कोऽस्तीति प्रसिद्धं तथापीह तिलकशब्दः श्रीचित्रकूटपर्वतोत्पन्नमृन्निर्मितभग वच्चरणाकृतिरक्तश्वेतश्रीविभूषितश्रीवैष्णवललाटस्थभगवदाह्लादस्वरूपपर-कः । 'कस्तूरी तिलकं दलाटपटले' इत्युक्तेः 'ॐ त्वां गन्धर्वा अखनंस्त्वामिन्द्र स्त्वां बृहस्पतिः स्त्वामोषधे सोमोराजा विद्वान्यक्षमादमुच्यत' इति यजुर्वेदमन्त्र प्रतिपादितो हि तिलकशब्दः । यदि शृङ्गारपरक एव तिलकशब्दस्तर्हिकथं वेदे भगवत् पूजनकाले चन्दनादिविलेपनपरकः प्रतिपादितः सङ्गच्छेत् ? । विदध्यात् कुर्यात् 'पश्चात् तिलकानन्तरं शुभां सुन्दरां युगलगुणगुम्फितां माला एव मालीका तुलस्या मालिका तुलसीमालिका ताम् दद्यात् वितरेत् शिष्यायेति शेषः । शिष्यकण्ठे तां गुरुर्विन्यषेदिति यावत् । षडक्षराणि यस्मिन् स तम् 'रां रामाय नमः' इति षडक्षरात्मकम् छिनत्तीति छित् छिद् धातोः 'क्विप्चच' इति कर्तरि क्विप् प्रत्ययः । भवस्य जन्ममरणहेतुकस्य जगतः छिद् इति भवच्छिद्तम् 'जन्ममरण नाशकम्' पाञ्चभौतिकशरीरसम्बन्धविनाशकमिति यावत् । तदुक्तं विदुषा श्री विश्वनाथेन 'पुनरुत्पत्तिः प्रेत्यभावः' इति गौतमसूत्रव्याख्यावृत्तौ 'तदीयमरणञ्च तदीयजीवनादृष्टनाशः । तदीयचरमप्राणसंयोगध्वंसः । तदीयोत्पत्तिस्तु स्वादृष्टानु कूलतदीयविजातीयशरीराधप्राणसंयोगः' अथवा जीवशरीरजन्ममरणहेतुकज गन्नाशकम् । भवः शिवे जन्मनि जगति चेति कोषः । रमन्ते योगिनो यस्मिन् स रामः श्रीयाविशिष्टः श्रीविशिष्टश्चासौ रामश्च इति श्रीरामस्तस्य । श्रीशब्द इह



सुन्दरतादिगुणवाचकस्ततो मध्यमपदलोपी विशेषणसमासः सङ्गच्छते । मन्यते स्ववाच्यदेवता स्वरूपं साक्षात् क्रियते येन स मन्त्रस्तम् । अववोधनार्थकमन् धातोरौणादिकस्त्रन् प्रत्ययः तस्मै शिष्यायेति शेषः दद्यात् वितरेत् च पुनः तस्य श्रीराममन्त्रस्य विधिस्तद्विधिस्तम् तस्य श्रीराममन्त्रस्यार्थस्तदर्थस्तम् । अपि च पुनः श्रीराममन्त्रस्यावशिष्टमुद्रादिकम् । विधानेति विधानतः । आद्यादित्वात् सार्व विभक्तिकस्तसिः । तं शिष्यम् वोधयेत् शिक्षयेत् ऋषिदेवतासङ्कल्पावाहनस्था पनषोडषोपचारपूजनसम्पुटं जपाद्यन्तमुद्राप्रदर्शनादिप्राणायामविसर्जनात्मकं वि धिंबोधयेदिति यावत् । गुरुर्विरक्तः श्रीवैष्णव एव भवितुर्महति नहि गृहस्थः । तदुक्तं श्रीनारदगीतायाम् 'गृही गुरुर्नकर्तव्यो न तरति न तारयेत् । पाषाणस्य यथा नौका नोतरति न तारयेत्' इत्यादिना दृष्टान्तदार्ष्टान्तिकं तथ्यमुक्तम् । ननु 'वर्णानां ब्राह्मणो गुरुरिति वचनस्य कागतिरिति मैवम् तद्वचनं विरक्तब्राह्मणपरकमेव ज्ञेयमन्यथोक्तनारदवचनविरोधस्यात् । ननु ॐ विशिष्टो मन्त्रो वैदिको भवितु मर्हति तस्यैव जपोऽपिस्यान्नान्यस्येति । ॐ रहितो मन्त्रोऽवौदको भवतीति तस्य जपोऽपिनहि भवितुमर्हति तस्यावैदिकत्वात् । तथा च श्रीरामानन्दीयश्रीवैष्णवा नां मन्त्रप्रणवरहितः 'रां रामाय नमः' इति तर्हिसोऽवैदिकस्तज्जपिनोऽप्यवैदिकाः संजाताः । एवञ्च हेयोऽयं सिद्धान्तोऽवैदिकत्वादित्यत्रोच्यते । किन्नाम वैदिकत्वं तल्लक्षणं विधीयतां तद्विना निर्वाहो नहि भवितुर्महति । यद्युच्यते वेदपठितत्वं वैदिकत्वम्, इति तर्हि किमनेनच्छिन्नं यथा शिवादयः शब्दा वेदेषु पठिताः सन्ति विष्णवादयश्च 'शिवायचभवायच' 'इदं विष्णुर्विचक्रमे' इत्यादयस्तर्हि सर्वत्वेदेषु श्रीरामशब्दोऽपि पठित एवास्तीति प्रदर्शितमेव प्रथमम् । उभयमतं समानजात मतो वैदिकावैदिकचर्चाबन्ध्या सुतायते । यद्युच्यते-

ॐ विशिष्टत्वं वैदिकत्वमिति तल्लक्षणं क्रियते यथा 'ॐ शिवाय नमः' 'ॐ नमो नारायणाय' इत्यादि । इहाहम्प्रत्यवतिष्ठे लक्षणं तदेव भवितुमर्हति यदव्याप्त्यतिव्याप्त्यसम्भवदोषत्रयरहितमिति विद्वत्समयोऽस्ति । भवदीयलक्षण मव्याप्तिदोषग्रस्तमस्तीति हेयमिदं लक्षणन्तथाहि-बहवोमन्त्रा वेदेषु सन्ति ये भवत्कृतलक्षणरहिताः सर्वेमन्त्रा वेदेषु ॐ विशिष्टा न दरीदृश्यन्ते तस्माद् भवदीयलक्षणमव्याप्तिदोषग्रस्तत्त्वादसमीचीनम् । अस्मदभीष्टषडक्षरात्मकेमन्त्रे रामित्य

ग्निबीजमेव प्रणवस्थले मन्यते 'रामनाम्नः समुत्पन्नः प्रणवोमोक्षदायकः' इत्या
गमोक्तेः । अपरञ्च ॐ पदमक्षरपूर्त्यर्थमेव न प्रतिपादितलक्षणवैदिकत्वबोधनार्थ
मपि तद्विषयकदोषदर्शितत्वात् । अस्माकीनश्रीसम्प्रदाये षडक्षरात्मकश्रीरामता
रकमनुसंजपेनैव परमश्रेयः सायुज्यनामकं स्वीक्रियते ॐ पदयोजनेन सप्ताक्ष
रात्मकः श्रीराममन्त्रस्यात्तथानास्माकमभीष्टो वेदवोधितश्च षडक्षरात्मकः । यथा
परमते ॐ नमः शिवाय ॐ नमो नारायणायेत्यादिमन्त्रः प्रणवविशिष्टः षडक्ष
रात्मकोऽष्टाक्षरात्मकः प्रणवपदनिःसारणे पञ्चाक्षरात्मकसप्ताक्षरात्मकः स्यान्नहि
परेषां तथाऽभिमतोमन्त्रः परमश्रेयप्रापकोऽस्तीति सिद्धान्तो मन्यते । तथैवास्माक
मपि समये षडक्षरात्मकश्रीराममन्त्रजपः परमश्रेयः प्रापकोऽस्तीति प्रणवपदयो
जनेन सप्ताक्षरात्मकः स स्यात् तेनास्माकं समये परमश्रेयो न मन्यते । अथैवं
कुचोद्यं स्यात् यथा वेदे सावित्रीमन्त्र आनुपूर्विकोऽस्ति 'ॐ तत्सवितुर्वरेण्यं
भर्गो देवस्य धीमहि' इत्यादि तथा भवदभिमतः श्रीराममन्त्रो नहि कस्मिंश्चिदपि
वेदे दृश्यतेऽतः कथं स सावित्रीमन्त्रसदृश इति चेदिहोच्यते-सर्वेऽपिमन्त्रा वाचकाः
सन्तीति तर्हि सावित्रीमन्त्रोऽपि कस्यचिद्वाचको भवितुमर्हति निर्णीयतां सावित्री
मन्त्रः कस्य वाचको ब्रह्मणो वाचक इति चेत् समायातः अस्मदीयपन्थाः परब्रह्म
वाचकः श्रीरामो वर्तते इति दर्शितमेवं प्राक् । सावित्रीमन्त्रवाच्यः श्रीराम एव
भवितुमर्हति नान्यः । वाचकपदेन वाच्याध्याहारो भवत्येव तर्हि वाचकेन सावि
त्रीमन्त्रपदेन वाच्यस्य श्रीरामाध्याहारः स्यात् । ॐ पदवाच्योऽपि श्रीराम एव भ
वितुमर्हति नान्यः । वेदपाठारम्भे सर्वत्र हरिः ॐ इति दृश्यते हरिपदेन श्रीराम एव
गृह्यते इत्यस्यामेवटीकायां प्रतिपादयिष्यते किमिहाग्रिमदीयः पक्षपातः कथन्नहि
वेदपाठारम्भे प्रणववदादौ शिवादिशब्दपाठः क्रियते दृश्यते च । यः कश्चिद्वदति
श्रीरामषडक्षरतारकमन्त्रजपे प्रणवविशिष्टमेव विधानमस्ति प्रतिमन्त्रोच्चारणे प्र
णवपदं देयमिति । अन्यत् प्रमाणमुच्यते 'राम्' इत्यग्निवीजेन राम इति शब्देन
ॐ पदोत्पत्तिर्भवति 'र आ म्' इत्यत्र 'पृषोदरादीनि यथोपदिष्टम्' इति पाणिनि
मुनिकृतसूत्रेण वर्णविपर्ययेण 'रस्योकारविधाने गुणे च कृते ॐ पदसिध्यति
तर्हि जन्यजनकभावो वर्तते । ओं पदस्य 'राम्' इति पदस्य 'राम' इति पदस्य
च 'राम्' इति 'राम' इति जनकस्थले ओमिति पदं जन्यस्थले वर्तते तर्हि जनकं



विना जन्यं न भवत्यतो न दोषावसरो भवितुमर्हति । इह श्रीरामरहस्योपनिषत्
प्रमाणन्दीयते 'प्रणवमूह्य प्रणवमुच्चार्य योराममन्त्रं जपति' इत्यादि किन्तु श्रीरा
मरहस्योपनिषदभिप्रायोऽयमस्ति यज्जपादौ प्रणवपदमुच्चार्य पुनः प्रणवपदं वि
हाय षडक्षरात्मकः श्रीराममन्त्रो 'रां रामाय नमः' इति जपः कार्यो जपसमाप्ति
काले पुनः प्रणवपदं कथयित्वा जपसमाप्तिः कार्येति सम्पुटात्मको जप एवाभि
प्रेतोऽस्ति नहि प्रतिमन्त्रोच्चारणे प्रणवपदं देयमन्यथा षडक्षरात्मकस्वरूपविघा
तः स्यात् प्रतिमन्त्रोच्चारणे प्रणवपददाने च सप्ताक्षरात्मकः श्रीराममन्त्रः स्यात्
नहि तथेष्टोऽस्माकमस्ति । अस्मत्सम्प्रदाये षडक्षरात्मकमन्त्रजपेनैव परमं श्रेयो
मन्यतेऽतः सम्पुटजपार्थं जपादौ प्रणवपदं देयं पुनः प्रणवपदं विहाय जपो विधे
यो जपान्ते पुनः प्रणवपदं देयमिति विधौ नहि षडक्षरात्मकता विघातः स्यादिति
श्रीरामरहस्योपनिषदभिप्रायोऽस्तीति प्रतिभावद्भिरेवावगन्तव्योऽस्ति नहि स्थूल
मतिमद्भिरिति विभावनीयम् । अपि च प्रणवश्रीरामशब्दयोर्जन्यजनकभावः स्वी
क्रियते जन्यजनकभावस्थले द्वयोरभेदो भवतीति प्रत्यक्षप्रमाणसिद्धं यथा जन
कमृद्द्रव्यकार्यघटद्रव्ययोरभेदोऽस्तीति सर्वैर्मन्यते । तथा कुत्रचित् स्थले कारण
मेवास्तीति कार्यं नास्ति तेन किं कारणगतसामर्थ्यं नश्यति ? नहि तदस्त्येवका
रणकार्ययोरभेदात् । अतोपि प्रत्यक्षतया षडक्षरात्मकश्रीरामतारकमन्त्रे प्रणव
पदाभावे नहि काऽपि हानिः स्यात् । प्रणवनिष्ठोपजीवकत्वनिरूपितषडक्षरात्मक
श्रीराममन्त्रघटकरामनिष्ठोपजीव्यत्वबोधपुरःसरप्रणवरामयोरभेदाद् । तथाहि
'रामः' इति पदे 'पृषोदरादीनि यथोपदिष्टम्' इति महर्षिपाणिनिसूत्रेण वर्णविश्ले
षविपर्ययभावो भवति 'आ अ र् म्' इति ततो ह्रस्वे पररूपेसति 'अ र् म्' इति
रस्योत्वेसति' अ उ म् इति 'आद्गुणः' इति गुणे ओम् पदसिद्धिः । इति प्रण
वरामयोर्जन्यजनकभावोऽस्ति । अपि च श्रीरामषडक्षरात्मके मन्त्रे 'राम्' इति
विजमस्तीति तत्र पदत्रयमस्ति तथाहि 'र अ म्' इति तत्र रपदोत्तरचतुर्थ्येकवचन
वोधिका ङे विभक्तिस्तस्याः 'सुपां सुलुगित्यादिपाणिनिवैदिकसूत्रेण लुग् भव
ति ततः पृषोदरादित्वाद्रस्य परप्रयोगे 'अरम्' इति जातं ततः पुनः पृषोदरायित्वा
द्रस्य उत्वे सति ततः 'अ उ म्' इति जातम् 'आद्गुणः' इति गुणेसति ओम् पद
सिद्धिर्भवति ततोऽपि रामपदप्रणवपदयोर्जन्यजनकभावोऽस्ति । ततः प्रणवनिष्ठ

जन्यत्वनिरूपितरामिति बीजनिष्ठजनकता बोधपुरःसरप्रणवपदरामिति बीज पदयोरैक्यस्वीकारेण नहिं षडक्षरात्मकः श्रीराममन्त्रोऽवैदिको भवितुमर्हति तथा च प्रणवपद 'रां' पदयोरभेदे जाते यदि प्रणवपदं वेदेषु वर्तते तर्हि षड क्षरात्मकश्रीराममन्त्रस्यापि तत्र पाठो जात एवास्ति के नाम षडक्षरात्मको मन्त्रोऽवैदिकोऽस्तीति वक्तुं शक्नुवन्ति । किं बहुना वल्गनेन रामिति वह्निवीजे नैव निखिलजगदुत्पत्तिस्थितिप्रलयो भवति । तथाहि विसर्गरचनार्थकोरम् धातुः रमयति चराचरं जगद्रचयतीति रः रम् धातो रौणादिकोडः प्रत्ययः । डित्वसा मर्थ्यादभस्यापिटिलोपेन र पदसिद्धः । अथवा दीप्त्यर्थकप्रयोजकणिजन्तो राजि धातुः । यथा स्वयाशक्त्यास्वातन्त्र्येण लीलार्थं सद्भक्तानुग्रहार्थं च निखिलं स्था वरजङ्गमात्मकं जगद् रमयति रचयति तथैव स्वेन तेजसा सर्वं जगद् राजयति दीपयति प्रकाशयति इति रः राजि धातो रौणादिक डः प्रत्ययः साधुत्वं प्रथम वत् । अथवा पालनार्थकः रक्षधातुस्तस्मादुक्तोडः प्रत्ययः साधुत्वं प्रथमवत् । रक्ष यति सर्वं चराचरं जगद् पालयति इति रः । अथवा क्रीडार्थकः प्रयोजकणि जन्तो रमिधातुस्तस्मादुक्तोडः प्रत्ययः साधुत्वं प्रथमवत् । रमयति निखिलं चिद चिदात्मकं पदार्थजातं क्रीडयति स्वकर्मानुसारमानन्दयतीति रः । अथवा क्षयार्थ कः प्रयोजकः णिजन्तो रेपिधातुस्तस्मादुक्तोडः प्रत्ययः णिलोपे 'रेप्' इत्यत्र, एप् इति टिलोपेरपदसिद्धिर्भवति । रेपयति नाशयति अर्थात् विशिष्टाद्वैतसमये 'यस्याकाशः शरीरं यस्य पृथिवी शरीरं यस्य प्रकृतिशरीरं यस्यात्मा शरीरम्' इत्यादिश्रुतिवचनेन 'जगत्सर्वं शरीरं ते' इति श्रीमद्वाल्मीकिमहर्षिवचनेन चिद चिदात्मकं निखिलं पदार्थं जातं ब्रह्मणः श्रीरामस्य शरीरमस्ति शरीरशरीरिभाव स्थले कार्यकारणभावस्थले चाभेदो भवतीति सर्वदार्शनिकसभयः । तर्हि प्रलय कालेस्वशरीरतया सर्वं चिदचिदात्मकं पदार्थजातं सूक्ष्मरूपेण नामरूपविभागा नर्हेण च रेपयति स्वस्मिन् स्थापयतीति 'रः' 'परौभुवोऽवज्ञाने' इति महर्षिपाणि निसूत्रेऽवज्ञानग्रहणेनावगम्यये धातूनामनेकार्थतेति । अत इहरेपि धातुः स्थाप नार्थक एव गृह्यते ।

संहारपदस्यायमेवार्थो यत् प्रलयकाले सूक्ष्मरूपेण नामरूपविभागानर्हेणा वस्थानमिति वेदसम्मतः श्रीविशिष्टाद्वैतसमयः । नहि संहारपदस्यस्वरूपाभा-



वोऽभिप्रेतोऽस्तिस्वरूपाभावार्थस्वीकारे 'यस्याव्यक्तं शरीरं यस्यात्माशरीरं यस्य पृथिवी शरीरमित्यादि श्रुतिवचः 'जगत्सर्वं शरीरन्ते' इति महर्षिश्रीवाल्मी किवचो विरुणद्धि । तस्मात् पूर्वोक्तव्याख्यानमेव समीचीनमिति राम् इति बी- जस्थ र पदसिद्धिर्ज्ञेया । एवञ्च सकलजगदुत्पत्तिस्थितिप्रकाशनक्रीडनपालन संहारकर्तृ रां बीजस्थं रमितिपदं जातम् । रसमीपस्थम् अ इति पदं साध्यते अव ति सर्वं चिदचिदात्मकं पदार्थजातं रक्षतीति अः परब्रह्म श्रीरामशरीरभूतप्रकृति विशेषः । अचित् पदार्थ इति यावत् । अर्थात् अवति जगद्रूपेण परिणमते इति 'अ' अथवा अवति अपृथक् सिद्धिसम्बन्धेन प्रलयदशायां सूक्ष्मरूपेण सृष्टिद शायाञ्च स्थूलरूपेण परस्मिन् ब्रह्मणि श्रीरामे तिष्ठति इति अः 'सेधतेर्गतौ' इति महर्षिपाणिनिसूत्रे गतिग्रहणेनधातुनामनेकार्थस्वीकारे दोषाभावः रक्षणाद्येकान विंशतिकार्थादवधातोर्विच् प्रत्ययः वलोपेविचः सर्वापहारिलोपे च अ इति पद सिद्धिर्ज्ञेया: 'छान्दसत्वाद्विभक्तेर्लुग्ज्ञेयः । ततः सवर्णदीर्घः । अ इतिपदसमीप स्थम् 'म्' इति पदं साध्यते । तथाहि ज्ञानार्थकोमन् धातुः अवबोधनार्थश्च मन् धातुः हर्षार्थकोमद् धातुः परिणामार्थको मसधातुः चतुर्भ्योऽपि धातुभ्यो ड्वि प्रत्ययः टिलोपेडलोपेविलोपे च 'म्' इति पदं सिध्यति मन्यते मनुते वा चेत नत्वेन तथ्यमतथ्यं वा विचारयति इति 'म्' जीवः चेतनो जीव एवैवं विचारयितुं शक्नोति इदं कर्तव्यमिदं न कर्तव्यम् । चेतनस्येश्वरस्य सर्वकामावाप्तत्वात् कर्तव्याभावात् नहि तत्रेश्वरे सर्वावाप्तकामे विधिर्निषेधो वा भवितुमर्हति । यद्यपि भगवत् पदवाच्यश्रीरामनामरूपलीलाधामयथार्थज्ञानेन हर्षति प्रसीदति इति 'म' जीवः मसति अनादिशुभाशुभात्मककर्मस्वरूपाविद्यया संकोचविकासञ्च- लब्ध्वापरिणमते इति म् जीवः म् शब्दस्य प्रातिपदिकत्वेसौ 'हल्ङ्याबित्यादिना सुलोपः 'रः' परब्रह्मसंज्ञकः श्रीरामः । 'अ' प्रकृतिः 'म्' जीवः रश्च अश्च म् च एतेषां समाहरो द्वन्दः 'राम्' इत्यत्र द्वन्द्वः समासो वास्तविकभेदे एव भवति धव खदिरादिवत् । तथा च रामिति वह्निबीजं प्रणवस्थानीयम् 'रामाय' इत्यस्यामर्थः शेषशेषिभावः अवयवावयवीभावः शरीरशरीरीभावः अंशाशीभावः सर्वेपर्या याः परब्रह्मश्रीरामशेषादिपदवाच्याः । चिदचिदात्मकं निखिलपदार्थजातं शेषादि पदवाच्यमिति 'रामाय' इत्यनेन शेषशेषिभावो बोध्यते नियम्यनियामकभावः प्र

योज्यप्रयोजकभावः शास्यशासितृभावोऽपिबोध्यते सूक्ष्मचिदचिद्विशिष्टाय स्थूल चिदचिद्विशिष्टाय शेषशेषिभाववते परब्रह्मणे रामाय नमः नमस्कारोऽस्ति । अथ वा रामितिवह्निबीजं प्रणवस्थानीयमिति बोध्यते । रामाय इत्यनेन शेषशेष्यादि भावः प्रशास्यप्रशासकभावो नियम्यनियामकादिभावोबोध्यते । 'अ' इति निषे धवाचकं पदम् 'म्' इति षष्ठ्यन्तपदं जीववाचकम् । यः जीवस्य न अस्तीति किं नास्तीत्याकाङ्क्षायाम् जगत् स्त्रष्टृत्वं सर्वज्ञत्वम् स्वाधीनत्वं व्यापकत्वं नास्ति किन्तु ब्रह्मणः श्रीरामस्यैव सर्वजगत् स्त्रष्टृत्वं सर्वज्ञत्वं व्यापकत्वमस्तीति बोध्य ते इति विशिष्टाद्वैतसिद्धान्तविन्मतम् ।

तदत्रानुसन्धेयं वेदैकप्रमाणपरतन्त्रभगवच्छ्रीपुरुषोत्तमाचार्यबोधायनसम्पा दितं जगद्गुरुश्रीराघवानन्दाचार्यप्रणीतरहस्यमार्तण्डभाष्यसहितं वेदरहस्यम् तथा हि 'सचन्त यदुषसः सूर्येण चित्रामस्य केतवो रामविन्दन् । आयन्नक्षत्रं ददृशे दिवो न पुनर्यतो न किरद्धानुवेद' १४६॥ (ऋ. १०।११।७) कथं पूर्वीणां सूनृतानां प्रतिपाद्योराम इत्यपेक्षायां मन्त्रोद्धारमाह-स चन्तेति यद्यस्मात् केतवो ज्ञानिनः । अस्य श्रीरामस्य चित्रां चित्राश्चित्रवर्णत्वाच्चित्रभानुरग्निः । तत्तत्त्वं रेफः स्वर मुक्तस्तत्सहिताम् । अग्निश्चिदाभासस्तन्मयं कारणं ब्रह्म श्रीराम एवेति ध्येयम् । राम् रामिति श्रुतिमविन्दन् शब्दतोर्थतश्च ज्ञातवन्तः चिदात्मकाऽग्नितत्वप्रतिपाद कसस्वररेकमुक्तां रामिति श्रुतिं जगृहुरित्यर्थः । ननु कारणब्रह्मप्रतिपादकोमिति श्रुतिरत्र नास्तीति चेत्तत्राह-उषसः । उषसमुषोवत्सूक्ष्मप्रकाशसमतिसूक्ष्मचिद-चिद्विशिष्टकारणब्रह्मप्रतिपादकाकाररूपं वर्णसूर्येण व्यक्तप्रकाशेन समष्टिस्थूल चिदचित्कारणब्रह्मापादकेनोकाररूपेण वर्णेन सचन्त गमयामासुः अकारे उकारमन्तर्भावयामासुरित्यर्थः । 'तत्राऽकारो वै सर्वा वागि'तिश्रुतेरितिध्येयम् । एवञ्च रश्च अम् चेति रामिति पदं जातम् । अर्धमात्रात् पारमैश्वर्यशक्त्यात्मि काऽन्तर्भूता ज्ञेया शक्तिशक्तिमतोरभेदात् । एवञ्च रामितिश्रुतिः श्रुतिसारभूतप्रणव रूपेति न वाचोयुक्तिमपेक्षत इति बोध्यम् । अथ रामाय नमः इत्यं शमुद्धरन्नाह-दिवोनदिवसेदृष्टमिव जाग्रद्दयायां दृष्टं वस्तुजातं स्वप्नदशायां पुनः सादृश्येन दृश्यते तथेत्यर्थः । पुना रामिति श्रुतेरनन्तरं तत्सदृशं रामिति श्रुतिं व्यष्टिस्थूलसूक्ष्म चिदचिद्विशिष्टकारणब्रह्मप्रतिपादिकां रामिति श्रुतिमित्यर्थः ददृशेज्ञातवन्तः । एतेन



समष्टिव्यष्टिस्थूलसूक्ष्मचिद चिद्विशिष्टकारणब्रह्मैक्यं प्रतिपादितमित्यवगन्तव्यम् । एवं च रामितिपदान्तरं पठितं रामिति पदं विशिनष्टि-आयन्नक्षत्रमिति । आकरः य इवाचरतीति यत् यकारः । नक्षत्रमिति प्रधानत्वाच्चन्द्रमाः तेन च तत्कारणं हृदयं गृह्यते 'हृदयान्म नो मनसश्चन्द्रमाः' इति श्रुतेः । यथा 'ता अन्नमसृजन्ते' त्यादावन्नशब्देन पृथिवी गृह्यते तद्वत् । आगमे च हृदयशब्दार्थो नमः शब्दः प्रसिद्धः । आकारो यकारो नमः शब्दश्च यत्र तादृश रामिति पदं रामित्यनन्तरं पठेदित्याशयः । एवं 'रां रामा य नमः' इतिमन्त्र उद्धृतो भवति । तत्र आयेति शब्दयोजनेन रामायेति चतुर्थ्यन्तं पदमुपास्यत्वेन रामस्येप्सिततमत्वं बोधयति । तत्र प्रह्वीभावप्रतिपादकं नमः प दम् । एवं रां रां च तस्मै रां रामाय नमस्करो मीत्यर्थः पर्यवसन्नो बोध्यः । तत्प्राप्ति फलमाह-यतो यतमानस्योक्तश्रुत्या श्रीराम माराधयतः । नकिः न किरतीतस्ततो विक्षिप्यते मन इत्यर्थाद् बोध्यम् । तादृशस्य यतमानस्य स्थिरं मनः । अद्धा सा क्षात् नु निश्चयेन वेद जानाति । उक्तं मन्त्रं जपन् मन्त्रार्थं श्रीरामं मनसा साक्षात् करोति 'मनसैवेदमाप्तव्यम्' इति श्रुतेरिति बोध्यम् । इत्यादिकमिति शम् ॥११।१२॥

रक्त शुक्लादि श्री के सहित सुन्दर ऊर्ध्वपुण्ड्र द्वादश तिलक करना चाहिए ललाट में १ दोनों हाथों में दो दो छाती पर दो, दोनों वगलों में एक एक, गले के ऊपर भाग में एक, पीठ के नीचे के भाग में एक, मस्तक के ऊपर भाग शिखा के नीचे के भाग में एक, तिलक करना चाहिए । ए द्वादश बारह तिलक हैं । केवल ललाट पर एक ही तिलक नहीं करना चाहिए ! किन्तु कम से कम २ तिलक होवें । या तो ८ होवें या तो चार होवें या तो दो होवें केवल एक ही तिलक ललाट पर न होना चाहिए । ए तिलक सफेद चित्रकूट की मृत्तिका श्रीरामरज से अथवा मैलकोटा पर्वत की सफेद मृत्ति का से ही होना तिलकों का विधान है । मलयाचल की लकडी का घिसा चन्दन तो केवल भगवान् के लिए है । हम सब भक्तों को तो केवल प्रसाद रूपसे भगवान् की पूजा से बचे हुए को अपने सफेद तिलक के पास में थोडासा लगाना चाहिए। मलयाचल की चन्दन की लकडी का घिसा चन्दन तो भगवान् के लिए है हम सबको ऊर्ध्वपुण्ड्र तिलक करने के लिए नहीं है । गोपीतलाव की मृत्तिका से श्री वैष्णवों को ऊर्ध्वपुण्ड्र तिलक नहीं करना चाहिए ।

श्री के विना तिलक निषेध है। केवल श्री भी नहीं करनी चाहिए। रक्त श्री विन्दु श्री लश्करी सफेदश्री, चतुर्भुजी श्री ये चार श्रीवाल्मीकिसंहिता के प्रमाण से माननीय हैं।

तिलक विधि के वाद मन्त्र विधि लिखी जाती है। तत्र जन्म मरण को मिटाने वाला श्रीरामजी का षडक्षर मन्त्र देना चाहिए। और मन्त्र के अर्थ को तथा मन्त्र की विधि को उस शिष्य को विधिपूर्वक समझाना चाहिए ॥११-१२॥

**चरमादीन् किलान्याँस्तुमन्त्रांस्तस्मै दिशेद्गुरुः ।**
**गायत्रीं वितरेत्सार्थां रामस्य सविधिन्तथा ॥१३॥**

गुरुः पञ्चसंस्कारकर्त्ता अन्यान् षडक्षरातिरिक्तान् चरम आदिर्येषान्ते तान् । 'सकृदेव प्रपन्नाय तवास्मीति च याचते। अभयं सर्वभूतेभ्यो ददाम्येतद्व्रतं मम' इति चरममन्त्रः । 'श्रीमद्रामचन्द्रचरणौ शरणं प्रपद्ये श्रीमते रामचन्द्राय नमः' इति द्वयमन्त्रः तस्य श्रीरामस्य मन्त्रास्तान् तस्मैशिष्याय दिशेत् वितरेत् किल इति पदं निश्चयेऽवश्यमेन चरमादिमपिदद्यादित्यर्थः । तथा अर्थेन सह वर्तते या सा सार्थां ताम् । तेन सहेतितुल्ययोगे इत्यनेन वहुव्रीहिः । नोपसर्जनस्येत्यनेन सह शब्दस्य सादेशः । विधिना सह वर्तते या सा सविधिस्ताम् तथैव वहुव्रीहिः । रामस्य गायत्रीं वितरेत् दद्यात् 'ॐ दाशरथाय विद्महे सीतावल्लभाय धीमहि तन्नो रामः प्रचोदयात्' प्रणवपदयोजनं वैदिकत्ववोधनार्थम् । तदर्थः प्रतिपाद्यते दशसु दिक्षु अप्रतिहततयारथोयाति गच्छति यस्य स दशरथः । पूर्वजन्मकृततीव्रतपः सन्तुष्टसाकेतधामस्य परब्रह्मश्रीरामतः पुत्रत्वेन लब्धजनिविषयकवरोमनुरेव तस्यापत्यं पुमान् दाशरथिस्तत स्वार्थेऽण् दाशरथः । परब्रह्मस्वेच्छया वेदमार्ग प्रज्वलनार्थं धृतदशरथगृहमानवतनुः श्रीरामचन्द्रः तस्मै दाशरथाय विद्महे दाशरथं वेदाम छान्दसत्वात् 'सुपांसुलुक्' इत्यादिपाणिनि सूत्रेण द्वितीवैकवचनस्थले चतुर्थ्यैकवचनादेशः । वेदाम इत्यस्य स्थले 'विद्महे' इत्यादेशः सीतावल्लभाय धीमहि इहापि तेनैव सूत्रेण तदादेशो ज्ञेयः सीतावल्लभं ध्यायेम' वहुवचनं वहु श्रीवैष्णवाभिप्रायेण तत् तस्मात् कारणात् यस्माद्वयं तं वेदितुमिच्छामोध्यातुञ्च जन्ममरणदुःखनिवृत्यर्थं तस्मात् ( सः ) रामः 'नः' अस्मान् प्रचोदयात् सायुज्य मुक्तिदानसमर्थायां स्वस्यां भक्तौ नियोजयेत् ॥१३॥



गुरुजी उस शिष्य को श्रीरामजी के षडक्षर मन्त्रराज के उपदेश के वाद दूसरे चरम आदि मन्त्रों को विधि के सहित देवें तथा उसी तरह से विधि के तथा अर्थ के सहित श्रीराम गायत्री को भी उस शिष्य को उपदेश करना चाहिए ॥१३॥

**भगवन्नामसम्बन्धिनामकुर्यान्मनोहरम् ।**
**एतान् पञ्चसुसंस्कारान्निवर्तयेद् गुरुः स्वयम् ॥१४॥**

**भगं षडैश्वर्यादिकं विद्यते यस्य स भगवान् प्रसंसार्थे मतुप् तस्य नामभगन्नामतस्य सम्बन्धः भगवन्नामसम्बन्धः सोस्ति यस्य तत् मनसोहरं मनोहरन्तत् । सुन्दरम् रामानन्दहरिदासनारायणानन्द इत्यादिकं तस्य शिष्यस्य नाम कुर्याद्विदध्यात् गुरुरिति शेषः । एतान् पूर्वदर्शितान् पञ्चसुसंस्कारान् गुरु स्वयम् निवर्तयेत् कुर्यात् एतेन सूचयन्ति यदाचार्य्यवरा एते दर्शितपञ्चसंस्कारान् गुरुरेव कुर्यात् तर्हि चतुः संस्कारान् गुरुः कुर्यात् तापसंस्कारमन्य इत्यन्धपरम्परा हेया । तप्तभगवदायुधाङ्कनम् शीतभगवदायुधाङ्कनं वा गुरुरेव कुर्यात् किन्तु तप्तभगवदायुधाङ्कनमेववरमिति विवेचयिष्यामि ॥१४॥**

शिष्य का नाम भगवान् के नाम से सम्बन्धी सुन्दर रखना चाहिए, भगवान् के नाम से विपरीत नाम नहीं रखना चाहिए उक्त पञ्च सुन्दर संस्कारों को श्रीगुरुजी को ही करना चाहिए।

अब यहाँ पर श्रीरामतारक षडक्षर मन्त्र का अर्थ कुछ संक्षेप में लिखना आवश्यक है। अर्थ के विना मन्त्र जप व्यर्थ है। ऐसे ही स्तोत्र तथा श्रीमद्रामायण गीता, भागवत आदि के अर्थ के विना ज्ञान हुए सबका पाठ व्यर्थ है । मन्त्रों की विधि भी जानना आवश्यक है। रां रामाय नमः । यह श्रीरामजी का मुख्य मन्त्र है, इसके जप से सायुज्य मुक्ति की प्राप्ति होती है । इस मन्त्र की तारक मन्त्रराज संज्ञा है । इसी मन्त्रराज को भगवान् श्रीशङ्करजी पार्वतीजी के सहित काशीजी में जपते हैं। इसी मन्त्र का उपदेश काशीजी में शरीर छोडनेवाले ज्ञानी भक्त जीवों को करते हैं। काशीजी में जो ज्ञानी भक्त जीव से भिन्न जो पापी जीव शरीर छोडते हैं उनको एक जन्म में ही मन्त्रराज श्रीरामतारक-मन्त्र का उपदेश नहीं दिया जाता है। जिनके पाप काशीजी में शुभ कर्मों के करने से नाश हो जाते हैं उनको ही वह उपदेश दिया जाता है सबको नहीं काशीजी में शुभकर्म करते-करते पाप कर्म नाश हो जाते हैं। जब पाप कर्म नाश

होंगे तभी वह उपदेश होगा ऐसे नहीं चाहे काशीजी में श्रीअ योध्याजी में अनेक वार शरीर छोडें तो भी पापी दुराचारी जीवों की मुक्ति नहीं होती है हाँ, वहां रहते-रहते जब पाप कर्म नाश हो जाएँगे तब तो काशी अयोध्या आदि में शरीर त्याग से मुक्ति होगी। काशी मरणान्मुक्तिः। अयोध्या मरणान्मुक्तिः। इत्यादि वाक्यों का संक्षिप्तार्थाभि प्राय भी यही है। कुछ लोग कहा करते हैं कि जिस मन्त्र में ॐ नहीं है वह मन्त्र अवैदिक है उसके जप से गति मुक्ति नहीं होती है। जैसे रां रामाय नमः। इसमें ओम् नहीं है। इसका उत्तर यह है। इस मन्त्र में रां यह बीज जो है वह ॐ के स्थान में है यह श्रीरामानन्द-श्रीसम्प्रदाय का सिद्धान्त है। दूसरा उत्तर यह है। ओम् की उत्पत्ति 'रां' इस बीज मन्त्र से होती है तथा राम शब्द से भी होती है तो यहाँ जन्य जनक भाव सम्बन्ध है जनक बडा है। जन्य उससे छोटा। जैसे-राम्, इसमें र, अ, म्, ये तीन पद है। 'पृषोदरादिनियथोपदिष्टम्' इस पाणिनीयसूत्र से पद का विपर्यय होता है। तब, अ, को र से प्रथम लाया गया तो अ, र-म् ऐसा बन गया। तब उसी पा.मु. के सू. से र के स्थान में उ किया तब अ-उ-म् ऐसा बन गया। आद्गुणः, इससे अ-उ-के स्थान में ओ गुण होने पर वैदिक प्रक्रियानुसार ॐ बनता है। यदि रां यह पद न होता तो ॐ की उत्पत्ति कैसे होती, कहिए महाशयजी ॐ बडा है कि रां यह पद बडा है। जनक के विना जन्य कहां से आवेगा। राम इस शब्द से भी ॐ बनता है। जैसे-र्-आ-म्-अ, ये चार पद है। उक्त नियमानुसार वर्णों का हेर-फेर किया तो आ-अ र्-म् ऐसा बन गया है तब अकः सवर्णे दीर्घः इस पा.मु. के सू. से आ अ इनके स्थान में सवर्णदीर्घ हो गया तो आ-र-म्, बना। पृषोदरादिनि यथोपदिष्टम्। तो है ही अतः र के स्थान में उकार किया तब आ-उ-म् ऐसा बन गया तब। आद्गुणः। इससे आ-उ इनके स्थान में ओ गुण हो गया तब ॐ बन गया तब विचारें कि जन्य ॐ है कि नहीं ? जनक राम शब्द अथवा रां यह बीज है कि नहीं। तो श्रीरामतारक मन्त्रराज ॐकार से युक्त है उक्त रीति से सिद्ध हो गया है। रां रामाय नमः। यहां रां बीज में, र १-आ २-म् ३-पद है। र पद में प्रथमाविभक्ति का एक वचन, सु, विभक्ति आई, सुप्तिङन्तं पदम्। इससे पद संज्ञा हो गई उस सु विभक्ति का पा. मु. कृत वैदिक प्रक्रिया के-सुपां सुलुक् पूर्वसवर्णात्। इससे लुक् हो गया है। अ पद होने पर सुविभक्ति आई पद संज्ञा हो



गई है अ का चादि गण में पाठ है तो अव्यय संज्ञा हो के। अव्ययादाप् सुपः। इससे लुक् हो गई है 'म्' के पर भी सुविभक्ति आई पद संज्ञा हो गई। उस सुविभक्ति का हल्ङ्याप् इस पा. मु. कृत सूत्र से लोप हो गया है अतः यह सिद्ध हो गया कि। ये तीनों पद पदसंज्ञक है तो अपदं न प्रयुञ्जीत। यह महाभाष्यकृत दोष नहीं आ सका है। र, पद का अर्थ यों समझें यह दृष्टिगोचर जो चेतन तथा जड़ चराचरात्मक जगत् है जड़चेतन जीवों के कर्मानुसार तत् तत् योनियों में जन्म देनेवाले यानि उत्पन्न करनेवाले तथा पालन करनेवाले तथा अन्त में नामरूपविभाग रहित सूक्ष्मरूप से अपृथक् सिद्धि सम्बन्ध से अपने में रख लेनेवाले परब्रह्म श्रीरामजी र, पद से वाच्य हैं जैसे रचना अर्थवाले चुरादिगण का अकारान्त रम धातु से उणादिगण में ड प्रत्यय हो के र शब्द बनता है। रमयति सर्वं जड़ चेतनात्मकं जगत् उत्पादयतीति रमि उ बना ड की इत्संज्ञा हो के लोप हो जाता है। णि टि संज्ञक है इसका भी लोप होता है। तब, र, शब्द बनता है इस शब्द र का अर्थ है समस्त जड़चेतन जगत् को बनाने वाले श्रीरामजी।

अथवा भ्वादिगण का क्रीडा अर्थवाले रम् धातु से प्रयोजकार्थ णिच् प्रत्यय के वाद उणादि का ड प्रत्यय कर टि लोप हो के र शब्द बनता है जो समस्त जड चेतन पदार्थ को रमावे अपनी दिव्य शक्ति से सो राम है अथवा भ्वादि गणपठित प्रकाश दीप्ति अर्थवाले राज् धातु से र शब्द बनता है। समस्तं विश्वं राजयति प्रका शित निजदिव्यशक्त्या इति रः। वही ड प्रत्यय होने पर र शब्द बनता है जो अपनी दिव्य शक्ति से समस्त जड़चेतन पदार्थ को प्रकाशित करे सो र शब्द है। अथवा भ्वादिगण का रक्षा अर्थवाले रक्षधातु से वही ड प्रत्यय होने पर र शब्द बनता है जो समस्त जडचेतन पदार्थ का पालन-पोषण-रक्षण करे सो र शब्द है अथवा दान अर्थक रा धातु से भी र शब्द बनता है। रापयति स्व स्वकर्मानुसारेण सुखदुःखा दिकं समस्तेभ्यो जडचेतनपदार्थेभ्योयः स रः। जो समस्त जडचेतन पदार्थों को अपने अपने कर्मानुसार से सुख दुःखादि को दिलावे सो र शब्द है।

शुभकर्म से धर्म होता है अशुभ कर्म से अधर्म होता है उन धर्माधर्मो के जीवों के कर्मानुसार ही भगवान् प्रेरक होते हैं कि इसने ऐसा कर्म किया तो इसको ऐसा फल दिया जाय क्योंकि धर्माधर्म जड है ऐसे अपना फल दे सकते नहीं हैं तो प्रभु श्रीरामजी उनके प्रेरक हैं। जड के प्रेरक चेतन होते हैं जैसे अहमदाबाद से रेलगाडी

मुम्बई जाती तो जड़ रेलगाडी का चलानेवाला चेतन मनुष्य ही तो होता है सर्व कर्मों के प्रेरक भगवान् हैं इसमें 'वैषम्य नैर्घृण्ये न सापेक्षत्वात् तथाहि दर्शति। (ब्रह्मसूत्र २।१।३४) यह व्यासदेव कृत ब्रह्मसूत्र प्रमाण है। नहीं तो भगवान् पक्षपाती तथा निर्दई हो जायेंगे यह समझ लेवें। प्रकृत सूत्र के आनन्दभाष्य में जगद्गुरु श्रीरामानन्दाचार्य जी ने यही लिखा है-'परमेश्वरोजीवकृतपूर्वशुभाशुभकर्मानुसारेण देवमनुष्यादिरूपां विषमां सृष्टिं तत्संहारञ्च करोति। अतस्तत्तत्कर्मैव तत्तद् वैषम्ये तत्संहारे च हेतुर्न परमेश्वरः' परमेश्वर जीवों के द्वारा पूर्व कृतशुभ तथा अशुभ कर्मानुसार से देवमनुष्य आदि विषम सृष्टि तथा उसका संहार भी करता है। अतः जीवों के वे कर्म ही देव मनुष्यादि विषम सृष्टि तथा तत्संहाररूप वैषम्य में कारण है ईश्वर नहीं। अथवा रीङ् क्षये धातु से भी उणादिक ड प्रत्यय होने से र शब्द बनता है। अन्तर्भावि णि के अर्थ को मानने से अर्थ संगत होगा। प्रलयकाले रीयते सर्वं चराचरं जगत् सूक्ष्म रूपेण स्वस्मिन् स्थापयति इति रः। (परौभुवोऽवज्ञाने) इस पा. मु. कृ. सू. में अव ज्ञानग्रहण से धातुओं के अनेक अर्थ हो जाते हैं। वैसे ही यहां पर क्षय अर्थ वाले रीङ् धातु का अपने विश्वरूप में अपृथक् सिद्धि सम्बन्ध से रखलेना अर्थ माना जायगा तभी निर्वाह होगा। विशिष्टाद्वैतसिद्धान्त में संहार व मिथ्या शब्दों का अर्थ माना जाता है नाम-रूप विभाग रहित सूक्ष्मरूप से भगवान् में रहना कारण कि भगवान् विभु व्यापक है जड़चेतन पदार्थ व्याप्य है अल्पज्ञ है सभी अवस्थाओं में जड़ चेतन पदार्थ भगवान् में ही अपृथक् सिद्धि सम्बन्ध से रहते हैं। सृष्टिकाल में नामरूप विभागयुक्त उसी सम्बन्ध से समस्त पदार्थ भगवान् में रहते हैं यदि र शब्द को यौगिक नहीं मान के केवल रूढी मानें धातुओं से निष्पन्न नहीं माना जाय तो भी शब्द का वही प्रथम वाला ही अर्थ होगा क्योंकि वह श्रीरामजी का ही वाचक है। जैसे श्रीरामपूर्वतापनीय उपनिषद् में लिखा है-रेफारूढामूर्तयः स्युः शक्तयस्तस्र एव च। यथैव वटबीजस्थः प्राकृतश्चमहाद्रुमः। तथैव रामबीजस्थं जगदेतच्चराचरम्॥ इति र पद के वाद अ पद है। इस अ पद के बहुत से अर्थ हैं और प्रसङ्ग से सभी ठीक ही हैं। रक्षणार्थक अव् धातु से उणादि प्रकरण में विच् प्रत्यय किया गया और च् की इत्संज्ञा होके लोप हुआ वि में इकार की भी इत्संज्ञा होकर लोप हो गया. च् का भी लोप किया तब, अव्। यह स्वरूप बच गया। तब धातु के हल् वकार



को पृषोदरादीनि यथोपदिष्टम्। इस नियम से लोप किया। पृषोदरादीनि, इस का यह भाव है कि लौकिक वैदिक शब्द जिस तरह से सिद्ध हो सकें वैसे ही उनको बनाना चाहिये। यः शिष्यते स लूप्यमानार्थाभिधायी इस नियमानुसार शेष रहा अव् में अ, यह अव का भी बोधक माना जाता है। अवधातु से प्रत्यय हुआ था वह कर्ता में हुआ था उसका अर्थ होगा आश्रय तब क्या भाव निकलता है कि रक्षण का आश्रय धातुओं के अनेक अर्थ होते हैं अतः अवधातु के १९ अर्थ हैं।

प्रसङ्गवश से तो १९-अर्थ होते हुये भी बनाना तथा क्षय ये दो अर्थ और भी माने जाते हैं जो अर्थ, र के कहे गए हैं। वे ही अर्थ अ के भी हैं। र पद से श्रीसीताजी, श्रीरामजी, का बोध होता है तो अ पद से, भी ये दोनों लिये जाते हैं, शक्ति शक्तिमान् में अभेद माना जाता है। श्रीसीताजी शक्ति, श्रीरामजी शक्तिमान् हैं। शक्ति के विना कुछ बन ही नहीं सकता है। बनाना, रक्षण करना अन्त में नाम रूप रहित चेतन जडपदार्थ को सूक्ष्मरूप से अपृथक् सिद्धि सम्बन्ध से अपने में रख लेना यह अर्थ अ का भी है यह अकार पद का अर्थ किया गया है एकायन ब्राह्मण की श्रुति तो यों कहती है कि ब्रह्म श्रीरामजी की शक्ति को माया कहा है, तो र पदवाच्य परब्रह्म श्रीरामजी अ पदवाच्य माया यानी श्रीरामजी की शक्ति माने सामर्थ्यम्, माने जीव तो विशिष्टाद्वैतसिद्धान्त आता है चित् चेतन अचित् जड तथा ब्रह्म इन तीनों का कार्यकारणभाव पक्ष में अभेद है। ब्रह्म सत्य तो है ही, चेतन पदार्थ तथा जडपदार्थ भी सत्य हैं नित्य हैं चेतन तथा जडपदार्थ सृष्टि दशा में नाम रूप में विभागवाले रहते हैं। प्रलय में नामरूपविभाग रहित रहते हैं दोनों अवस्थाओं में चेतन तथा जडपदार्थ अपृथक् सिद्धि सम्बन्ध से परब्रह्म में ही रहते हैं। ब्रह्म व्यापक है और चेतन तथा जडपदार्थ व्याप्य हैं। व्यापक माने सब जगह पर सब शक्तिवाला होना। व्याप्य माने सर्वशक्ति रहित। मुक्तजीवों में प्रभु के समान सभी शक्ति हो जाती है किन्तु जगत् रचना की शक्ति जीवों में नहीं आती है जीव कर्म के बन्धनों से मुक्त होते हैं तथा अल्पज्ञ भी होते हैं इसलिए जीवों को व्याप्य कहा जाता है।

एक अ शब्द रूढी है तो इसका चादिगण में पाठ मान के निपात संज्ञा तथा अव्यय संज्ञा हो के तथा प्रातिपदिक संज्ञा होने के वाद विभक्ति आई अव्यय होने से

उसका लुक् हो जाता है। विभक्ति आने पर पदसंज्ञा हो जाती ही है तो अपदं न प्रयुज्जीत यह दोष नहीं आ सकता है। एक अ शब्द अव् रक्षणे धातु से बनता है। यह यौगिक शब्द है इसकी प्रातिपदिक संज्ञा हो के विभक्ति आती है, पद संज्ञा भी हो जाती है। उस विभक्ति का 'सुपां सुलुक्' इत्यादि पा.मु. कृत वै.सूत्र से लुक् हो जाता है तो यहां भी अपदं न प्रयुञ्जीत यह दोष नहीं आ सकता है। एक अ शब्द प्रभु श्रीरामजी की आदि शक्ति श्रीसीताजी का वाचक है और एक अ शब्द भगवान् की माया का वाचक है यह माया माने भगवान् का शरीर-स्वरूप जड प्रकृति उसका भी वाचक है। अ.अ.यहाँ दोनों के स्थान में पृषोदरादीनि यथोपदिष्टम्। इस पा.मु.सू. से अथवा 'अतोगुणे' इस पा.मु.कृत सू. से पररूप होने से एक अ शब्द रह जाता है। इस अ शब्द से प्रथम कहे गए दोनों अर्थों का बोध होता है। इसलिए एक अ शब्द जो श्रीसीताजी का बोधक है यह चेतन है। श्रीसीताजी श्रीराम जी की शक्ति हैं इन दोनों का अभेद है। एक अ शब्द भगवान् श्रीरामजी का शरीर स्वरूप जड प्रकृति का वाचक है।

जीव तो चेतन हैं, मनुष्य पशु आदि और जड़ भी हैं वृक्ष पर्वत आदि। चेतन तथा जड़ दोनों पदार्थ भगवान् के शरीर हैं। व्याप्य है इसलिए जीवों को दो अव स्थाएँ हैं एक सूक्ष्म दूसरी स्थूल। सूक्ष्म चिदचिद्विशिष्ट ब्रह्म तथा स्थूल चिदचिद्वि शिष्ट ब्रह्म, इन दोनों से युक्त ही ब्रह्म है अपृथक् सिद्धि सम्बन्ध से इसी को वि शिष्टाद्वैत कहा जाता है। प्रकृति शब्द से वाच्य दो प्रकृति है। एक तो भगवान् का शरीर स्वरूप है स्थूलावस्थावाली इसका भगवान् के शरीर-स्वरूप में परिणाम होता है यह परिणाम सद्वारक है इसलिए भगवान् में कोई दोष नहीं आता है। एक प्रकृति निरीश्वरवादी सांख्यों की है। यह भगवान् का शरीर नहीं है। सांख्य लोग इसी को जगत को बनाने वाली मानते हैं। किन्तु **ईक्षतेर्नाशब्दम्** (१।१।५) इस सूत्र से व्यासदेवजी ने खण्डन कर दिया है इसका विवेचन इसी सूत्र के आचार्य प्रवर श्रीरामानन्दाचार्य कृत आनन्द भाष्य महामहोपाध्यायजी कृत श्रीरघुवरीयवृत्ति तथा उसके अन्याचार्यकृत अनेक संस्कृत हिन्दी विवरणों में देखें।

इसलिए **'यतो वा इमानि भूतानि जायन्ते'** इत्यादि यजुर्वेदीय तैत्तिरीयोपनिषद् के प्रणाम से परब्रह्म श्रीरामजी ही जगत् की रचना पालन तथा अन्त में नाम



रूपरहित सूक्ष्मरूपवाले चेतन जड़ पदार्थ को अपने में रख लेते हैं। सृष्टि कालारम्भ में भगवान् कार्य ब्रह्म को पैदा करके उनको वेदों को पढा के नामरूप विभागवाले समस्त चेतन जड जगत् को बनवाते हैं। तब तो **'यतो वा इमानि भूतानि जायन्ते'** इस श्रुति से विरोध आता है ? विरोध नहीं है। कारण कि परब्रह्म श्रीरामजी अपनी जितनी शक्ति से जो काम लेना होता है वह शक्तिवाले वनके वह कार्य करते हैं। जगत् सृष्टि के लिए कार्यब्रह्म बन जाते हैं। पालन के लिए विष्णु बन जाते हैं। संहार माने नामरूप-विभाग-रहित हो के ब्रह्म में सूक्ष्मरूप से अपृथक् सिद्धि सम्बन्ध से रहना यह संहार शब्द का ठीक-ठीक अर्थ है इसके लिए शंकर बन जाते हैं। इसलिए पुराणों से भी विरोध नहीं होता है। पुराणों में लिखा है कि जगत् को ब्रह्मा बनाते हैं। विष्णु पालते हैं। शंकर संहार करते हैं।

वेद वेदान्त में तो यों लिखा है कि सभी कार्य एक कारण ब्रह्म ही करता है किन्तु कारण परब्रह्म श्रीरामजी हैं तो तत् तत् कार्य के लिए तत् तत् शक्ति से तत् तत् नाम रख के कार्य करते हैं किसी के सहायता के विना ही प्रभु परब्रह्म श्रीरामजी स्वयं सब कार्य करते हैं। अब अ के वाद तीसरा पद (म) है यह म् शब्द जीव का वाचक है। यह म् शब्द मन् ज्ञाने तथा मनु अवबोधने तथा मदी हर्षे तथा मसी परिणामे इन धातुओं से बनता है· मन् ज्ञाने मनु अवबोधने इन दोनों का एक ही अर्थ है। इन धातुओं से उणादि प्रकरण के ड प्रत्यय होने से टि लोप होके म् बन गया प्रातिपदिक संज्ञा होके सु विभक्ति आई इसका **हल्ङ्याब्भ्यः** इस पा. मु. कृ. सू. से लोप हो गया पद संज्ञा हो ही जाती है विभक्ति आने पर, किसी किसी का यह मत है कि जीव वाचक आत्मन् शब्द में वृषोदरादीनि, इस सू. से आत् अन् का लोप हो जाने से म् शब्द शेष रहता है यह जीव वाचक है ही। र-परब्रह्म श्रीरामजी अ. प्रभु का शरीरादि स्वरूप प्रकृति माया आदि। म् सभी जीव इन तीनों का शरीर शरीरीभाव पक्ष में भेद है और सूक्ष्म चिदचिद्विशिष्ट ब्रह्म और स्थूल चिदचिद्विशिष्ट ब्रह्म इनका अभेद है क्योंकि विशिष्टाद्वैत सिद्धान्त का यही अर्थ है कि पूर्वोक्त दोनों का अभेद है। श्रीशङ्कराचार्यजी केवल अद्वैत मानते हैं। हमारे श्रीरामानन्दीय श्रीसम्प्रदाय में दोनों का अभेद है तब तो इस मत में ब्रह्म प्रकृति जगत् जीव ये तीनों नित्य हैं। इस विषय को जगद्गुरु श्रीरामानन्दाचार्यजी ने ब्र.सू. १।१।१ में **'एवञ्चाखिल**

**श्रुतिस्मृतीतिहासपुराणसामञ्जस्यादुपपत्तिबलाच्च विशिष्टाद्वैतमेवास्य ब्रह्ममीमांसाशास्त्रस्य विषयो नतु केवलाद्वैतम्'** ऐसा लिखकर स्पष्ट किया है। मन ज्ञाने मनु अवबोधने इनका अर्थ है ज्ञान तो चेतन जीवों में तो ज्ञान रहता है कर्तव्याकर्तव्य के फल से जड जीवों का ज्ञान संकुचित रहता है जड होने से, इन जडों का ज्ञान छिपा रहता है हर्ष तो सभी जीवों को होता है। चेतनों को प्रिय वस्तु मिलने पर हर्ष होता है। जडों वृक्ष पर्वतादिकों को जल मिलने पर हर्ष होता है तभी तो वृक्षादि जल पाने पर बढते हैं। पर्वतादिक भी बढते हैं परिणाम चेतनों में यह है ज्ञान का संकोच होना। जडों में भी जल देने पर भी प्रसन्नता का बढने का अभाव होना। यदि जीव वाचक आत्मन् शब्द से, म्, वाच्य जीव लिया जाए तो इस पक्ष में सभी चेतन तथा जड आ जाते हैं यहां कुछ विवाद नहीं है संकोचादि का यही पक्ष ठीक भी प्रतीत होता है।

अब चौथा पद रामाय है यहां प्रथम राम में प्रकृति प्रत्यय का ज्ञान होना आवश्यक है। राम शब्द में क्रीडा अर्थक रम धातु है इससे हलश्च इस पाणिनी मुनि के सूत्र से बाहुलकात् कर्ता अर्थ में भी घञ् प्रत्यय होता है। रमते चराचर पदार्थेषु यः स रामः। पदार्थ चेतन तथा जड दो तरह के हैं। जो चर चेतन तथा अचर जड सभी पदार्थों में रमते हैं विचरते हैं वह राम है। अधिकरण में तो उस सूत्र से घञ् प्रत्यय होता ही है **'रमन्ते योगिनोऽनन्त्ये सत्यानन्दे चिदात्मनि इति रामः।** देशकाल वस्तु कृतभेद रहित नित्य आनन्द चैतन्य ज्ञानस्वरूपवाले परब्रह्म में योगी जन सांसारिक विषयों को छोडके जिसमें रमण करते हैं विचरते हैं वे श्रीरामजी हैं। अन्तर्भावितणि के अर्थ को मान के उसी रम् धातु से कर्ता में प्रयोजक कर्ता में यदि बाहुलक उस उक्त घञ् प्रत्यय किया जाता है तो अर्थ यह होता है कि जो समस्त चेतन तथा जड पदार्थों को रमावे वे श्रीरामजी हैं। श्रीवाल्मीकि मुनिजी लिखते हैं कि **'रामो रमयतां वरः'** रमण करानेवालों में अपने अपने कर्मानुसार सुखदुःख स्वरूप फल दिलाने वालों में जो श्रेष्ठ हैं वे श्रीरामजी हैं। कृदन्त मान के राम शब्द की प्रातिपदिक संज्ञा होके चतुर्थी के एकवचन ङे् विभक्ति आके रामाय बनता है। रामाय इसका अर्थ यह है कि समस्त चेतन तथा जड पदार्थ प्रभु श्रीरामजी के लिए है। जैसे घर के समस्त उपयोग के पदार्थ घर के मालिक के लिए हैं वैसे ही समझना



चाहिए। समस्त लोकरूपी घर के मालिक प्रभु श्रीरामजी हैं। यही शेष शेषीभाव है। शेष माने भोग्य पदार्थ चेतन जडात्मक हैं शेषी माने उन समस्त चेतन जड पदार्थों को अपने उपयोग में लेनेवाले। वह उपयोग क्या है कैसा है सो देखें जिन जिन कर्मों के आधार के अनुसार से प्रभु श्रीरामजी सुख दुःखात्मक फल दिला के अपने साक्षीभूत होते हैं। जीवों के कल्याणार्थ सद्भावना प्रकट करके धीमे-धीमे संसार से मुक्त कर देते हैं। श्रद्धालु सद्भक्त ममता-मोह में धन की चाहना, स्त्री की चाहना, पुत्र की चाहना, मान प्रतिष्ठा की चाहना जीवों को इसी संसार चक्र में डाल के अनेक दुःखों को देनेवाले हैं तो प्रभु श्रीरामजी की इन चाहनाओं से जीवों को अलग करके संसार चक्र में न आने देना ही शेषी भावना है।

अब रामाय के वाद (न) पद पांचवां है इसका अर्थ-निषेध है। छठवां पद (मः) है यह षष्ठी का जात्यभिप्रायेण एक वचन है। इसका अर्थ है जीवों का, तो न-मः इन दोनों का मिलके यह अर्थ है कि समस्त चेतन जड़पदार्थ श्रीरामजी के आश्रित हैं। जीवों के नहीं। यदि मः यह जात्यभिप्रायेण चतुर्थी का एक वचन मानें और चतुर्थी के एक वचन ङे विभक्ति के स्थान में 'व्यत्ययोवहुलम्' इस पा.मु. सू. से षष्ठी का एकवचन होता है ऐसा मान लिया जाय तो, नमः इन दोनों पदों का यह अर्थ होता है कि समस्त चेतन जडात्मक पदार्थ प्रभु श्रीरामजी के लिए है। जीवों के लिए नहीं है। **रां रामाय नमः** इस मन्त्रराज का संक्षिप्त अर्थ यह है यों तो इस मन्त्रराज के अनन्त अर्थ हैं। विशेषार्थिओं को श्रीवैष्णवमताब्जभास्कर की स्वामी श्रीरामेश्वरानन्दाचार्यकृत प्रभा-किरणादि टीका के साथ जगद्गुरु श्रीरामानन्दाचार्यश्रीरघुवराचार्यजी वेदान्तकेसरीकृत मन्त्रराजमीमांसा को देखना चाहिये।

**ॐ सकृदेवप्रपन्नाय तवास्मीति च याचते।**
**अभयं सर्वभूतेभ्यो ददाम्येतद्व्रतं मम॥**

श्रीरामजी का यह चरममन्त्र है।

**ॐ श्रीमद्रामचन्द्रचरणौ शरणं प्रपद्ये ॐ श्रीमते रामचन्द्राय नमः**

यह श्रीरामजी का द्वयमन्त्र है।

**श्रीरामः शरणं मम**

यह श्रीरामजी का शरणागति मन्त्र है।

ॐ दाशरथायविद्महे सीतावल्लभाय धीमहि तन्नोरामः प्रचोदयात् ॥

यह श्रीरामगायत्री है । इनका भी अर्थ बहु विस्तृत है निबन्धकायबृद्धि भय से यहां नहीं लिखा गया है ॥१४॥

**श्रद्धालुश्चभवेच्छिष्यो भवबन्धनमुक्तये ।**
**गुरोराज्ञां सदा शिष्यः शिरोधार्यां सुमानयेत् ॥१५॥**

पुनः शिष्यः शासितुं योग्यः । भव एव संसार एव जन्मैवबन्ध तं भव बन्धनं तस्मान्मुक्तिस्तस्यै । प्रशस्ता श्रद्धा आस्था गुरुमन्त्रेष्टदेवेषु अस्ति यस्य स श्रद्धालुः । प्रसंशार्थे आलुच् प्रत्ययः श्रद्धालुः गुरौ गुरुमन्त्रे इष्टदेवे गुरुसदुप देशेषु वेदशास्त्रादिषु श्रद्धावान् भवेत् स्यात् शिष्यः सदा सर्वावस्थासु गुरोराज्ञां धर्तुं योग्या धार्या शिरसाधार्य्या शिरोधार्या ताम् सुमानयेत् स्वीकुर्यात्-मन्त्रे तीर्थे द्विजे-देवे-दैवज्ञे भेषजे गुराविति वाक्यं स्मरेत् ॥१५॥

जन्म मरण से छूटने के लिए शिष्य को श्रीगुरुजी में श्रद्धावाला होना चाहिए। और जगत् में मेरा आदर होवे इसलिए विवेकी शिष्य हमेशा श्रीगुरुजी की आज्ञा को अपने शिरोधार्य करे अर्थात् सादर मानना चाहिए । गुरुजी का दरजा सबसे बडा माना गया है हाँ राजा बलिजी के गुरु शुक्राचार्य जैसा गुरु होवे तो ऐसे गुरु की आज्ञा नहीं माननी चाहिए । सदाचारी सत्व गुणी क्षमाशील विद्वान् गुरुजी को श्रीरामजी के रूप में मानना चाहिए । कामी है तो श्रीकृष्णजी के रूप में मानना चाहिए । क्रोधी हैं तो परशुरामजी के रूप में मानना चाहिए । गुरुगोविन्द दोनों खडे किनके लागूँ पाँय । वलिहारी गुरुदेव की गोविन्द दियो लखाय । अतः गुरुजी का निरादर नहीं करना चाहिए यदि अज्ञानवश द्वितीय तृतीय लक्षण वाले गुरु किये गये हों तो भी ॥१५॥

**गुरुश्चापि कदाचित् तं दुःखदेकर्मणीह हि ।**
**न योजयेद्भवेरुर्ध्वरेतास्त्वं शिष्य शंव्रज ॥१६॥**

पुनः गुरुरपि कदाचित् कस्याञ्चिदवस्थायां हि निश्चयं यथा स्यात् तथा अस्मिन् संसारे इति इह दुःखं जन्ममरणादिरूपं ददातीति दुःखदंतस्मिन् कर्मणि कर्मविरोधे तं शिष्यं न योजयेत् प्रवर्तयेत् किन्तु भवबन्धनविनाशकायाः श्रीरा मानन्यभक्त्या लब्धाया सामुज्यमुक्तेः प्राप्तये शिष्याय शुभाशिर्वादं वितरेत् हे



शिष्य ! शं संसृतिजनिमरणनाशकं सामुज्यमुक्तिस्वरूपकं सुखं व्रज प्राप्नुहि । तथा त्वम् ऊर्ध्वरेतो यस्यासौ तथा भवेः स्याः । ब्रह्मचर्यवान् वेदब्रह्मचर्य्यवानेव सायुज्यमुक्तिं व्रजेदिति शास्त्रवचनप्रमाणेन ऊर्ध्वरेता एव जन्ममरणराहित्यं गच्छेदिति तथैव शिष्यं शिक्षयेदिति । यस्तु स्वतएव संसारजन्यभोगजम्बाले पतितः स कथमन्यं ततो मुक्तिमार्गोपदेष्टुं समर्थः स्यात् । प्रच्छालनाद्धिपङ्कस्य दूरादस्पर्शनं वरमिति न्यायात् । यस्तु स्वयं जगज्जन्यभोगजम्बालायते तस्य समीपं गत्वा को जगद्दुःखरूपं पङ्कमार्जयितुं समर्थो भवितुमर्हतीति न कश्चिदपीति ह्यतो ज्ञात्वैव गुरुः कर्तव्यो यो विरक्तः स्वयं स्वात्मानं मोचयितुं समर्थः स एवान्यमपि मोचयेत् ॥१६॥

गुरुजी भी किसी भी दशा में इस संसार में दुःख देनेवाले कर्म में शिष्य को नहीं नियुक्त करे बल्कि शिष्य को सद् उपदेश देवें और कहे कि बच्चा तुम सच्चे ब्रह्मचारी बनो और अन्त में सायुज्य मुक्ति रूपी सुख को प्राप्त करो । नहीं तो, हरहि द्रव्य अरु शोक न हरहि । सो गुरु घोर नरक मह परहि ॥ की दशा हो जाएगी ॥१६॥

**परार्थः सत्यसन्धश्च प्रेक्षायुक्तोऽप्यभूः सदा ।**
**प्रातरुत्थाय शिष्य ! त्वं स्नानादिकार्यमाचरेः ॥१७॥**

हे शिष्य ! त्वं सदासर्वदा परेभ्योऽर्थः प्रयोजनं यस्य स परार्थः स्वातिरिक्तप्रयोजनवान् स्वस्मै किमपि कार्यन्नारभेथाः किन्तु परेभ्यः सर्वोत्कृष्टशक्तिभ्यः श्रीरामश्रीसीताश्रीहनुमदादिभ्यः प्रयोजनवान् पूजनस्मरणतन्मन्दिरमार्जन तद्दर्शनतत् तीर्थगमनादिप्रयोजनवान् । श्रीरामादीनां सर्वशक्तीनां सेवनादिप्रयोजनवान् । अथवा परेभ्यो जनेभ्यः परेषां जनानां वा अर्थी प्रयोजनवान् । च सदा नित्यम् सत्यसन्धा प्रतिज्ञा यस्यासौ सत्यसन्धः सत्यवक्तायत्किमपि कथयेत् तत् सर्वं सार्थं कथयेदितिभावः प्रेक्षाकर्तव्याकर्तव्यविचारः प्रेक्षयायुक्तः प्रेक्षा-युक्तोऽप्यभूः भवेत्यर्थः । सर्वदा प्रातर्विभाते उत्थाय स्नानादिर्यस्य तत् तत् स्नानादिकार्य्यं विधेयमाचरेः ॥१७॥

श्रीगुरुजी अपने शिष्य को सदुपदेश देवें कहे कि हे श्रद्धालु शिष्य ! तुम दूसरों की भलाई सम्बन्धी प्रयोजनवाले तथा सत्य प्रतिज्ञावाले और हमेशा ही कर्तव्या-कर्तव्य विचारवाले बनो इस कार्य के करने से हानि है कि लाभ है यह विचार

बना रहे। जिस कार्य से कोई सुन्दर लाभ होवे, दूसरे लोग प्रशंसा करें कि यह कार्य सुन्दर है जिससे दोनों लोकों में लाभ है, आदर सत्कार है वही कार्य हमेशा करो। और तुम हमेशा ही सूर्य उदय से पहले ही सबेरे उठकर के विधिपूर्वक स्नान आदि नित्यकर्म करो सूर्य उदय के समय पर भूल से भी सोना निषेध है इससे बुद्धि बल मन्द होते हैं ॥१७॥

**सन्ध्यां त्रैकालिकीं कुर्या स्ततोभगवतो जुषम् ।**
**श्रीभागवतशुश्रूषां न तद् भेददृशं क्वचित् ॥१८॥**

**हे शिष्य ! इति शेषः 'त्रिषु कालेषु भवा त्रैकालिकी ताम् । त्रि सुप् काल सुप् इति दशायाम् 'कालाठ् ठञ्' इति ठञ् प्रत्ययः स्तद्धितार्थसमासः 'ठिट् ढाणञित्यादिना' डीप् प्रत्ययः । सन्ध्यां कुर्या विदध्याः । तस्मादिति ततस्तद नन्तरं भगवतः श्रीरामादेः जुषं सेवां कुर्याः । अनेनस्वनित्यकर्मकृत्वैव भगवत्से वाकर्तव्येति बोधितम् ।**

**भगवति श्रीरामचन्द्रे भक्तिरस्ति येसान्ते भागवतास्तेषां शुश्रूषां सत्कारं कुर्याः । क्वचित् कस्यामपि दषायाम् तेषु भागवतेषु योभेदस्तद् भेदस्तद्भेदस्य दृक् तद्भेददृक् ताम् न कुर्याः श्रीवैष्णवेषु भेदबुद्धिं नविदध्या इत्यर्थः । यथा मर्यादं श्रीवैष्णवसत्कारं कुर्यात् किन्तु तदवमानपूर्वकं तदसत्कारं न विदध्यात् स्वबन्धुबुद्ध्या भागवतान् सत्कुर्यादिति तद्रहस्यम् ॥१८॥**

श्रीगुरुजी शिष्य को यह उपदेश देवें कि हे शिष्य तुम स्नानादि के बाद प्रातः काल की तथा मध्याह्न बारह बजे की तथा साम की सन्ध्या को नियम रूप से हमेशा किया करो। अपना नित्य नियम सन्ध्या-वन्दन आदि करके तब भगवान् की सेवा पूजा करके अपना जीवन सफल करो। इसके वाद में यथाशक्ति श्रीवैष्णवों की सेवा भोजनादि की सेवा करो। श्रीवैष्णवों के विषय में भेद दृष्टि किसी अंश में नहीं करना क्योंकि जब मनुष्य गृहस्थ आश्रम को छोड के विरक्त हो जाता है तब यह विचार नहीं करना चाहिए कि यह नीच कुल में यह ऊँच कुल में उत्पन्न हुआ है। यह विचार विरक्त श्रीवैष्णवों के विषय में नहीं करना चाहिए। स्मृतिसार में लिखा है- **यथा काञ्चनतां याति काशंरसविधानतः । तथा दीक्षा विधानेन द्विजत्वं जायते नृणाम् ॥** जैसे कांसा नामक अमुक धातु पदार्थ अमुक औषधि के रस के संयोग से



सोना हो जाता है। उसी तरह विधि विधान से विरक्त श्रीवैष्णव दीक्षा लेने से समस्त प्राणी द्विज हो जाते हैं किन्तु विरक्त दीक्षा लेकर उसके अनुकूल रहे वही प्राणी मनुष्य विरक्त श्रीवैष्णव दीक्षा लेने से द्विज बन जाता है सभी नहीं। देखिए विश्वामित्रजी क्षत्रीय थे किन्तु कर्म से ब्राह्मण बन गए हैं आज ब्राह्मणों में कौशिक गोत्र प्रसिद्ध है। शिवलिङ्गसहस्राणां शालग्रामशतस्य च । द्वादशकोटिविप्राणामेकः श्वपचो वैष्णवः ॥ यह वेदव्यास लिखित महाभारत का वचन है **विप्राद् द्विषड्गुणयुतादरविन्द नाभपादारविन्दविमुखाच्छवपचं रिष्ठम् । मन्ये तदर्पितमनोवचनेहितार्थप्राणं पूनाति सकुलं नतु भूरिमानः ॥** यह भी वेदव्यासदेवजी लिखित श्रीमद्भागवत के सप्तम स्कन्ध का वचन है। युधिष्ठिरजी के यज्ञ में ८४ हजार बडे-बडे ब्रह्मऋषि वेदपाठियों के रहते हुए शङ्ख नहीं बजा और एक जाति का भंगीश्वपच के आने से शङ्ख बज गया था यह क्या चमत्कार की बात है ? । इसलिए कर्म से जीव ऊँचा हो जाता है। किन्तु कर्म सच्चा होना चाहिए ॥१८॥

**स्वस्मै याञ्चा न कर्तव्या भागवतार्थमेव च ।**
**एकाकी न कदापित्वं वसेस्तु वैष्णवैः समम् ॥१९॥**

**हे शिष्य ! इति शेषः अये शिष्य त्वया स्वस्मै निजोपयोगार्थं याञ्चा याचनं न कर्तव्या किन्तु भागवतेभ्य इदम् अर्थं प्रयोजनम् भागवतार्थम् श्रीवैष्णवेभ्यः याञ्चाविधेयेति । कदाऽपित्वम् नैकः सहायः वर्तते यस्यासौ एकाकी एककः नवसेः किन्तु वैष्णवैः समंवसेः अनेन तव बुद्धिविपर्य्ययो न भवेदन्यथा बुद्धिविपर्ययः स्यात् तदा तव विनाशः स्यात् 'बुद्धिनासात्प्रणस्यति' इति भगवदुक्तेः ॥१९॥**

हे शिष्य! तुम अपने लिए तो किसी हालत में भी भिक्षा नहीं मांगना किन्तु आए हुए श्रीवैष्णवों के लिए भिक्षा मांग सकते हो। परोपकार के लिए भिक्षा लाभ कारक है। जो सच्चा साधु है उसको तो उसके आसन पर ही भोजनादि की सामग्री आ जाती है कारण कि सच्चरित्रवाला साधु जहाँ रहता है उसकी प्रसिद्धि हो जाती है लोग समझते हैं कि अमुक जगह पर सच्चा साधु रहता है वह अपने लिए कभी गाँव नगर में नहीं आता है उन साधु महाराज को भोजनादि सामग्री वहीं उनके पास भेजवा देना चाहिए। और हे शिष्य तुम अकेले कहीं भी नहीं रहना किन्तु श्रीवैष्णव

साधुओं के साथ में ही रहना। कारण अकेले रहने से स्वतन्त्रता होके अनर्थ कार्य भी करने में आ जाता है जिस से अधः पतन हो जाता है। साधुओं के साथ रहने से ऐसा भय रहता है कि कुछ अनुचित होगा तो दूसरे साधु रञ्ज हो पडेंगे कहेंगे कि तुमने ऐसा अनुचित व्यवहार क्यों किया ? दत्तात्रेयजी अकेले ही रहना पसन्द किए हैं किन्तु इनके समान होना भी तो कठिन है। इनके समान है तो अकेले भी रह सकते हैं ॥१९॥

**विष्णुश्रीरामभक्तिं श्रुतिगणविदितां कामधेनोः समानाम्**
**शश्वत्सायुज्यमुक्तेः खलु सुवितरिणींधातृशर्वादिकाम्याम् ।**
**प्रल्हादेष्टाशुकर्त्रीं सुरनिकरनुतां शेमुषी सत्स्वरूपाम्**
**कुर्यान्नित्यं मनुष्योगतजनिकुशलीनो कदाचिद्विमुञ्चेत् ॥२०॥**

गता चासौ जनिश्च गतजनिः गतजनौयत् कुशलं मङ्गलं गतजनिकुशलं तदस्त्यस्यासौ गतजनिकुशली पूर्वजन्ममङ्गलवान् पूर्वजन्मनिमङ्गलवान् पूर्वजन्म निमङ्गलवान् को भवति ? योधर्मात्मा सः। यः पूर्वजन्मनि धर्मात्मा नासीत् स श्रीरामभक्तिं करोत्येव नहीति प्रसिद्धम्। मनोरपत्यं पुमान् मनुष्यः श्रुतीनां गणस्तत्र विदिता प्रसिद्धा ताम्। वेदनिकरप्रसिद्धा ताम्। स्वाश्रितान् प्राणिनः कामैः सुन्दरमनोरथैर्धिनोति प्रीणयति तर्पयति या सा कामधेनुस्तस्याः समाना तुल्या ताम्। मनोरथवाचककामशब्दोपपदात् प्रीणनार्थकधिविधातोरौणादिके नुच् प्रत्यये व लोपे गुणे करणसमासे कामधेनुशब्दसिद्धिः। तुल्यार्थैरतुलोप माभ्यां तृतीयाऽन्यतरस्याम्' इत्यनेन तृतीयाऽभावः पक्षे षष्ठिविभक्तिः। तृतीया पक्षेऽपि न हि छन्दोभङ्गो भवितुमर्हतीति सदाचार्यवराभिप्रायः। कामधेन्वा समा नागति तत्स्वरूपम्। यथा कामधेनुः स्वाश्रितेभ्यो निखिलं ददाति तथा श्रीराम भक्तिरपीतिप्रसिद्धम्। ध्रुवप्रल्हादादिविषये विदितमस्ति प्रेक्षावतां तत्त्वविदां विदु षाम्। शश्वदव्ययो नित्यवाचको वर्तते शश्वच्चासौ सायुज्यमुक्तिश्चेति तस्या कृद्यो गे षष्ठीज्ञेया। खलु निश्चयम् यथा स्यात् तथा सुष्ठु वितरतीति सुवितरिणीताम्। सुविपूर्वकात् तृधातोः नन्द्यादित्वात् ल्युट् प्रत्ययः। विपूर्वकतृधातुदानार्थको भव ति। धाता च शर्वश्चेति धातृशर्वौ तावादी मुख्यौ येषान्ते धातृशर्वादयः। काम यितुं योग्या काम्या धातृ शर्वादिभिः काम्या धातृ शर्वादिकाम्या ताम्। विधि



शिवादिकाङ्क्षितव्याम्। प्रल्हादस्येष्टं तदाशुशीघ्रम् करोति ताम्। सुराणान्निकरः सुरनिकरस्तेन नुतास्तुता वन्दिता वा ताम्। शेमुष्याः सत्स्वरूपमिवस्वरूपं यस्याः सा ताम्' ज्ञानाभिन्नामिति यावत्। विष्णुश्चासौ श्रीरामश्च विष्णुश्रीराम स्तस्य भक्तिस्ताम्। नित्यं सर्वदा कुर्याद्विदध्यात् कदाचित्कस्याञ्चिदप्यवस्थायाम् नो नहि विमुञ्चेत् त्यजेत्। ननु पूर्वमपि सम्बित्स्वरूपामिति भक्तिविशेषणमुक्त मिहापि भक्तिपदस्य विशेषणं शेमुषीसत्स्वरूपामिति प्रतिपाद्यते कथन्नानेन पुनरु क्तिदोषः स्यादितिमैवं 'द्विर्बद्धं सुबद्धं भवतीति न्यायबोधनार्थं तदिति न तद्दोषा वसरः शेमुषीपदाभिन्नैवभक्तिरिति। ननु कर्मधारय समासो विशेष्यविशेषण-स्थल एव भवति यथा नीलोत्पलमित्यादौ प्रकृते विष्णुरामशब्दयोर्विशेष्यविशे षणाभावादिति चेन्मैवम् विष्णुशब्दो विशेषणं रामशब्दश्च विशेष्योऽतस्तयोः विशेषणसमासो भवितुमर्हति नीलोत्पलमित्यादिवत्। तदत्र श्रीरामशब्दार्थः प्रथम मेव प्रतिपादितः श्रीरामो रामशब्दार्थश्च विशेष्य एवेति। अत्र भवान् प्रष्टव्यः विष्णुशब्दार्थः कः ? वेवेष्टिसर्वत्रव्याप्नोतीति विष्णुरिति व्याप्त्यर्थकविष् धातो रौणादिकः कर्तरिनुक् प्रत्ययः। इत्युक्तव्युत्पत्या विष्णुशब्दार्थः सर्वव्यापको भवति संविशेषणवाचकस्तदाश्रयोविष्णुशब्दोऽस्ति विशेषणवाचक एव नहि विशेष्यवाचक इति। गुणसधर्मप्रत्यायकः शब्दो विशेषणं प्रतिपादयति यथा नीलोत्पलमित्यादौगुणो नीलस्तस्य धर्मो नीलत्वन्तस्य प्रत्यायको नीलः स च विशेषम्। प्रकृते गुणः सर्वव्यापकस्तस्यधर्मः सर्वव्यापकत्वं तस्य प्रत्यायकः सर्वव्यापकः स विशेषणम्। एतदाश्रयो विष्णुरिति विशेषणम्। यस्य घटस्य गुणो नीलस्तस्य धर्मोनीलत्वं नीलत्वस्य प्रत्यायनार्थंनीलः प्रयुज्यते स घटो विशेष्यः। प्रकृतेऽपि यस्य रामस्य गुणः सर्वव्यापकरूपो धर्मस्तस्यधर्मसर्व व्यापकत्वं तस्य प्रत्यायनार्थं विशेषणं सर्वव्यापकः प्रयुज्यते स रामो विशेष्यः, 'सीता लक्ष्मी भवान् विष्णु' रिति महर्षिश्रीमद्वाल्मीकिवचनेन प्रतियते विष्णु शब्दो विशेषणं रामशब्दो विशेष्य इति। व्युत्पत्या च श्रीरामसीताशब्दयोः वि-शेष्यत्वमेव लक्ष्मीविष्णुशब्दयोर्विशेषणत्वमेव च प्रतीयते। विष्णुशब्दश्रीराम शब्दयोर्व्युत्पत्त्या विष्णुशब्दस्य विशेषणत्वम्। श्रीरामशब्दस्यव्युत्पत्यायोऽर्थो दर्शितस्तदनुसारेण श्रीरामशब्दो विशेष्य एव भवितुमर्हति। वेदेषु बहुस्थले

विष्णुशब्दो विशेषणत्वेन प्रयुक्तः । तथा च विष्णुश्रीरामभक्तिमित्यस्य पर्याय पदम् । सर्वव्यापकश्रीरामभक्तिमिति बोध्यम् । यत्र कुत्रापि विष्णुपदं समायातं तत्र सर्वत्र विष्णुपदं श्रीरामस्य विशेषणमेवास्तीति विशेषणपदं विशेष्यार्थबोध कमेव भवति । यथा नीलोघट इत्यत्र नीलाभिन्नो घट इति प्रतीतिः । अभेद सम्बन्धावच्छिन्ननीलनिष्ठप्रकारतानिरूपितघटनिष्ठविशेष्यताकशाब्दबोधं स्वीकुर्वन्ति सर्वे विद्वद् धुरीणा इति । एवमेव अभेदसम्बन्धावच्छिन्नविष्णुनिष्ठप्र कारतानिरूपितरामनिष्ठविशेष्यताकशाब्दबोधोभवितुमर्हति सर्वस्वीकार्य्यः । सर्ववेदप्रतिपादितो विष्णुर्वर्तते यत्र कुत्रचित् विशेष्यरूपेणापिपठितो विष्णु शब्दो यथा 'रघुपतिराघव' इत्यादयः विशेष्याः सन्तोऽपि रामस्य विशेषणवाच का वस्तुतोभवन्ति तथैव विष्णुशब्दोऽपि यत्र कुत्रचित् विशेष्यत्वं गतोऽपि वस्तु तोरामस्य विशेषणवाचक एव विष्णुशब्दः ऋग्वेदस्य पञ्चममण्डले सप्ताशीति संख्यके सूक्ते प्रथमो मन्त्रः 'प्रवोमहेमतयो यन्तु विष्णवे मरुत्वते गिरिजा एवया मरुत् । प्रशर्धाय प्रयज्यवे सुखादये तवसे भन्ददिष्टये धुनिव्रताय शवसे' अस्य मन्त्रस्य देवतामरुदस्ति तस्यैव विशेषणं भूत्वाऽत्र विष्णुशब्दः समायातो वर्तते । अन्येऽपि वहवोमन्त्राः सन्ति येषु विष्णुशब्दोऽन्येषां देवानां विशेषणतया समायातोवर्तते । एतज्ज्ञानान्तरमेतत्स्पष्टं भवति यद्विष्णुशब्दोनहिशङ्करादेर्विशेषणं भवितुमर्हति किन्त्वन्यदेवविशेषणार्थमेवविष्णुशब्दः 'इदं विष्णुर्विचक्रमे त्रेधा निदधे पदम् । समूढमस्यपाᳬंसुरे स्वाहा' इति यजुर्वेदस्य पञ्चमाध्यायस्य १५ मन्त्रः । इह यो विष्णुशब्दोवर्तते सविशिष्टैकदेवार्थेऽस्ति स कस्यदेवस्यविशेषण मिति सम्प्रतिनिर्णीयताम् ?

यो वै तां ब्रह्मणोवेदामृतेनावृतां पुरम् ।
तस्मै ब्रह्म च ब्राह्माश्चचक्षुः प्राणं प्रजां ददुः ॥

अथर्ववेदोमण्डलं दशमं प्रथमानुवाकोद्वितीयसूक्ते २४ मन्त्रः । इत्यत्र ब्रह्म पुरीवर्णणं वर्तते । अष्टचक्रानवद्वारादेवानां पूरयोध्या । तस्यां हिरण्मयः कोशः स्वर्गोज्योतिषावृतः ॥ अथर्वका. १ सू. २ मन्त्रः ३१ तस्मिन् हिरण्मयेकोशेत्र्य रेत्रिप्रतिष्ठिते । तस्मिन् यद् यक्षमात्मन्वत्तद्वैब्रह्मविदोविदुः । अथर्व.का. १ सू. २ मन्त्रः ३२ अस्मिन् मन्त्रेऽयोध्यापुरीनामवर्तते । पूर्वमन्त्रे प्रतिपादितो विष्णु-



शब्दोऽयोध्यापुरोब्रह्मणोविशेषणं वर्तते । अयोध्यापुरो ब्रह्मश्रीरामचन्द्र एव नान्यत् । इत्यत्रोक्तमन्त्रे ब्रह्मपदं समायातं नहिरामपदं तर्हिकथमयोध्यापुरोब्रह्म रामएवनान्यदितिचेदुच्यते । अथर्व. का. ४ अनु. २ सू. ६ मन्त्रः १ ।

ब्राह्मणोयज्ञेप्रथमोदशशीर्षोदशास्यः ।
स सोमं प्रथमः पपौ स चकारारसंविषम् ॥

अथर्ववेदस्य परिस्थितिरीदृशीशोभनावर्तते यत् अयोध्यापुरोब्रह्मरामएवे ति स्पष्टं भवतीत्युक्तमन्त्रार्थविवेचनेनयदयोध्यापुरो ब्रह्मश्रीराम एव नान्यदस्तीति तस्यैव विष्णुशब्दो विशेषणमस्तीति निर्विवादो वर्तते । इत्यलमिहाधिकविवेच नेन । कुशली इतिस्थाने सुकृती इति पाठः क्वचिदुपलभ्यते सोऽपि पूर्वव्याख्याऽविरुद्धमितिध्येयम् ॥२०॥

वेदों के समुदाय में प्रसिद्धा कामधेनु के समान नित्यसायुज्य मुक्ति को देने वाली ब्रह्माशिवादि की इच्छा का विषय, परमभक्त प्रह्लादजी के मनोरथ को जल्दी से पूर्ण करनेवाली समस्त इन्द्रादि देवताओं से प्रशंसनीय, भेद-दृष्टि से रहित, भेद भाव रहित विष्णु-स्वरूप श्रीरामजी की भक्ति को पूर्वजन्म के पुण्यवाले मनुष्य को हमेशा करना चाहिए किसी भी हालत में भक्ति को नहीं छोडना चाहिए । श्रीरामजी की भक्ति में समस्त जीवों का अधिकार है प्रभु भक्ति तो भेद दृष्टि से रहित है भक्ति में नीच ऊँच का विचार ही नहीं है । जग में रामभजा सो ऊँचा । जीव ऊँच नीच नहीं है कर्म ही ऊँच नीच है ॥२०॥

वैष्णवानामपमानं कस्मिन्नंशेनकारयेत् ।
अपिसत्कारमेवाशुविपरीतोऽशिवंव्रजेत् ॥२१॥

वेवेष्टिसर्वत्रव्याप्नोतीति विष्णुः सर्वव्यापकः श्रीरामः । विष्णुसर्वव्यापक श्रीरामोभक्तिरस्त्येषान्ते वैष्णवास्तेषाम् । भक्तिः इतिपा. सूत्रेण अण् प्रत्ययः । यदीह विष्णुपदेन सर्वव्यापको रामो न गृह्यते तर्हि ये श्रीरामभक्ता सन्ति तेषां वै ष्णवसंज्ञानस्यात् । किन्तु श्रीरामोभक्तिंभजिनीयः अस्त्येषान्ते रामा इत्येव संज्ञका भवितुमर्हन्ति परन्तु नैतदस्ति रामभक्तानामपि वैष्णवसंज्ञाऽस्तीति नहि केषां वि प्रतिपत्तिरस्ति यतो हि ज्ञायते विष्णुपदेन सर्वव्यापकश्रीराम एव गृह्यते दर्शि तञ्चसाम्प्रतमेव विष्णुशब्दो रामशब्दस्य विशेषणमस्तीति । कस्मिन्नंशेक्वचिदपि

**विषयेऽपमानं तिरस्कारं न कारयेत् नहि कुर्यादिति । कारयेदितिचुरादिगणस्या कृतिगणत्वात् तत्र कृधातोरपि याठोभवितुमर्हति अपि किन्तु तेषाम् सत्कारमेव शीघ्रं कारयेत् । विपरीतो वैष्णवावमानकर्त्ता अशिवममङ्गलमाशुव्रजेत् प्राप्नु यात् । अम्बरीषदुर्वासाप्रह्लादप्रभृतीनामत्र दृष्टान्तत्वेन ध्येयम् ॥२१॥**

श्रीवैष्णवों का अपमान किसी अंश में भी नहीं करना चाहिए । किन्तु श्रीवैष्णवों का यथाशक्ति हमेशा तुरत ही सत्कार ही करना चाहिए आए हुए श्रीवैष्णवों का सत्कार करना किन्तु किसी न किसी अंश में उनका अपमान करनेवाला मनुष्य दुःख ही प्राप्त करता है ॥२१॥

**विरक्तो वैष्णवो भूत्वाविवाहं नहि कारयेत् ।**
**रेतः पातो न कर्तव्यस्तं कृत्वापतितोभवेत् ॥२२॥**

**विरक्तः नैष्ठिकब्रह्मचारी परमहंससंन्यासी च वैष्णवोभूत्वा विवाहं परिणयं नहि कारयेत् न विदध्यान् । यदि स एवकर्तव्यस्तदा प्रथममेव स कर्तव्यः । विरक्तपदं गृहीत्वा स न करणीयः । अन्यथोभयधर्महानिः स्यात् । प्रथममेवं विचारो जातोऽहं विरक्तः स्याम तदनन्तरं विरक्तत्वं विहाय विवाहं वाञ्छति स तु एवं करोतिष्ठीवतं कृत्वाऽवलेढीति । यदि प्रथमं विरक्तोजातस्तदनन्तरमितस्ततोव्यभिचारद्वारास्वीयवीर्यहानिं करोतितं निन्दति विरक्तेन वैष्णवेन रेतसः पातो रेतपातो न कर्तव्यः । रेतः पातं कृत्वा पतितो भवति सद्वैदिककार्यातिदिशेषः । यः सद्वैदिककार्यतः पतितः स जघन्यां योनिं प्राप्नोतीति उभयविधोऽपि ष्ठीवनं कृत्वाऽवलेहनं करोति । ऐहिकामुष्मिकभव्यपदात् पतितत्वाजघन्यां योनिं गच्छति । तस्मात् प्रथममेव विविच्यविरक्तत्वं गृह्णीयात् । गृहस्थो वैष्णवो भूत्वासर्व मनुभूय ततो विरक्तत्वं गृह्णीयमितिभावः ॥२२॥**

विरक्त श्रीवैष्णव होके विवाह नहीं करना चाहिए, और जान बुझके सावधानी अवस्था में ब्रह्मचर्य को नहीं विगाडना चाहिए, कारण की यदि स्त्री प्रसङ्ग ही करने की इच्छा रही तो विरक्त श्रीवैष्णवों के मार्ग में आके विरक्त श्रीवैष्णव क्यों बनना गृहस्थ भी तो वैष्णव ही है, गृहस्थ श्रीवैष्णव बनना चाहिए था । वेदव्यासजी कहते हैं कि **'वनेगतस्य यदि कामरागता गृहाश्रमः किं न करोत्यवद्यम्'** विरक्त होके यदि सांसारिक भोग विलासों की इच्छा है तो गृहस्थ आश्रम में ही रहके विवाह करके



रहना ठीक था ऐसा पवित्र गृहस्थाश्रम क्या अपराध करता है कि जिसको छोड के फिर गृहस्थाश्रम के भोग विलास चाहता है यह बहुत अनुचित है । विरक्त होके सावधानी अवस्था में जान बुझ के ब्रह्मचर्य को त्याग करनेवाला विरक्त पतित हो जाता है ऐसे लोग उभयतः भ्रष्ट हो जाते हैं । अधोगति को प्राप्त होते हैं । विरक्त को बहुत धन संग्रह भी हानीकारक ही है ॥२२॥

**भूत्वामहान्तोयदियोविरक्तोमौर्ख्यात्स्वकंकामयतेविवाहम् ।**
**धर्मच्युतेस्तस्य वहिष्कृतिंसंकुर्युर्विरक्ताः स्तुतवैष्णवावै ॥२३॥**

**यदि चेद्यः पूर्वम् च विगतं रक्तं विषयेषु प्रेम यस्य सविरक्तः । नैष्ठिक ब्रह्मचारी परमहंस संन्यासी च वैष्णव इतिशेषः, चतुर्थपादे वैष्णवपदोपादानात् । महान् अन्तः भगवत् सम्पत्तिरक्षणपूर्वकविरक्तमहापुरुषमार्गप्रदीप्तिकरण रूपः यस्य स महान्तः । रूढिशब्दोऽयं महान्त इति । गृहस्थमहान्तव्यावृत्तये विरक्तपदोपादानम् । यस्य गृहस्थपरम्परा तद्विषयकवार्तैव का कर्तव्या स तु स्वकं विवाहं करोत्येव यः कश्चित् स्वशिष्यविवाहं कारयति तद्व्यावृत्तये स्वकमिति पदम् । या विरक्तपरम्परागतमहान्तपदविस्तद्गतस्येयं विचारणाऽस्ते विरक्तमहान्तपदं गत्वामुह्यति कर्तव्याकर्तव्यविचारं विस्मरति यः स मूर्खः कर्तव्याकर्तव्यविचाररहितः । वैचित्यार्थकमुहधातोरौणादिकखप्रत्ययः । ह्रस्परेरेफादेशो दीर्घश्चेतिनिपातनात् । वैचित्र्यं कर्तव्याकर्तव्यविवेकाभावः । मूर्खस्यभावः कर्मवेतिमौर्ख्यम् भावेष्यञ् प्रत्ययः । तस्मात् मौर्ख्यादज्ञानात् स्व एवस्वकस्तम् स्वार्थेकन् प्रत्ययः । विवाहं परिणयं कामयते इच्छति स्वधर्मविहायसंसृतिजन्य भोगान् भोक्तुं वाञ्छतीति यावत् । यतोऽभ्युदयनिःश्रेयसिद्धिः स धर्मस्तस्माच् च्युतिः पतनं यस्य स तस्य । तस्य विरक्तमहान्तपददूषकस्य बहिष्कृतिम् तस्मान् महान्तपदादितिशेषः । बहिष्कारं विरक्ताः स्तुताश्च ते वैष्णवाश्चस्तुतवैष्णवाः प्रतिष्ठतवैष्णवाः कुर्युर्विदध्युः ।**

**वै शब्दोऽयमव्ययप्रकरणे पठितोनिश्चयार्थकः । ननु नैष्ठिकब्रह्मचारी परम हंससंन्यासी च महान्तपदं गृह्णात्येव नहि महान्तपदेऽनेकप्रपञ्चोपस्थितत्वादिति सत्यम् । उक्तमपि वर्तते-नरकायमतिस्ते चेत् पौरोहित्यं समाचर । यावद्वर्षकिमन्येनमठचिन्तां दिनत्रयमिति तथापि धर्मरक्षास्थलन्तु मठाश्रमादिकमेव यदि मठा**

श्रमादयोनस्युस्तर्हि धर्मरक्षास्थलं किं स्यात् । आनन्दभाष्यकारजगद्गुरुश्रीरामानन्दाचार्यमहाराजानां काश्यां पञ्चगङ्गाघट्टोपरि श्रीमठाचार्यपीठ आसीत् तत्रैव स्थित्वा ते पूज्यपादतया धर्मप्रतिपालनपूर्वकं धर्मरक्षां कृतवन्तो देशान्तरेऽपि तत एव स्वीयं शिष्यनिवहं विरचय्यधर्मरक्षाऽर्थं विचारितवन्तो देशान्तरेऽपि धर्मस्थापयित्वापुनरेव श्रीमठे ह्यागत्यधर्मचर्चामकार्षुरिति के न जानन्ति। श्रीवशिष्ठविश्वामित्रादिमहर्षिणामाश्रामा बभूवुस्तत्र सम्यग् धर्मरक्षा बभूवेति के न जानन्ति श्रीमद्वाल्मीकीयश्रीमद्रामायणे प्रसिद्धेयं चर्चा अतो मठाश्रमादय आवश्यकाः सन्ति तत्रत्याधिपत्यं गृहीत्वा सनातनधर्मरक्षार्थनैष्ठिकब्रह्मचारिपरमहंससंन्यासिनां तद् ग्रहणेन नहि काचित् क्षतिर्भवितुमर्हति । उक्तनिषेधवाक्यन्तु एवं योजनीयं यत् सनातनधर्मरक्षार्थमाचार्यपीठमठादयस्तत्रत्याधिपत्यं लब्ध्वा यदि धर्मविरुद्धाचरणं कुरुते तत्परं तद्वाक्यमिति जगद्गुरुश्रीरामानन्दाचार्य्या एवनैष्ठिकब्रह्मचर्या श्रमपरमहंससंन्यासाश्रमस्य पोषकाः सन्ति ह्यतोधर्मरक्षणार्थमठाश्रममहान्तपदं गृह्णीयमिति । ननु कस्यचित्प्राप्तपदापहरणं पापायस्यात् 'अग्निदोगरदश्चैव शस्त्र पाणिर्धनापहः । क्षेत्रदारापहर्ता च षडेते ह्याततायिनः' इतिमनुवचनविरोधादिति चेत् सत्यम् । मठाश्रमादिधनन्तु सनातनश्रीवैष्णवधर्मरक्षार्थमेवास्तितदर्थमेवा मिलितं तदभावेतदपहरणं न दोषाय स्वीयविरक्तवैष्णव धर्मविरुद्धाचारवन्तं तत्पदात् निःसार्य्य धर्मरक्षार्थं तद्वंश्याय योग्याय कस्मैचिद्देयं तत्पदम् । तदभा वेऽन्यस्मैयोग्यविरक्तश्रीवैष्णवायदेयम् । निषेधवाक्यन्तु एवं योज्यं यत् पर द्रव्याण्यपहृत्य स्वीयोपभोगकरणं धर्मरक्षा भवतु नवा तत्परमिति एवं कृते न किमपि पापं भवितुमर्हति ॥२३॥

जो विरक्त महान्त होके यदि मुर्खता से अपना विवाह करना चाहता है तो परममाननीय विरक्त श्रीवैष्णवों को निश्चय करके अपने धर्म से भ्रष्ट हुए उस महान्त का बहिष्कार करना चाहिए। कारण कि गुरु परम्परा से वह स्थान विरक्त श्रीवैष्णवों का है उस स्थान में महान्त हो के यदि वह महान्त विवाह करलेता है तो विरक्त गुरु स्थान की प्रतिष्ठा विगड जाती है तो ऐसे महान्त को महान्तपद से हटा के उस स्थान में उसी सम्प्रदाय का विरक्त विद्वान् साधु को आचार्य महान्त बना देना चाहिए। यदि वही विरक्त हो के स्थान बनाया है तथा महान्त बना है तो भी उसका बहिष्कार



करना उचित ही है कारण की विरक्त हो के स्थान बनाया महान्त बना प्रसिद्धि हो गई की यह विरक्त है बाद में मूर्खता से विवाह करता है तो भी उस पद से उसको हटा के विरक्त उसका शिष्य होवे सुयोग्य है तो उसकी अथवा सुयोग्य किसी दूसरे श्रीवैष्णव विरक्त को आचार्य महान्त बनाना चाहिए। यदि राज्य की सम्पत्ति से विवाह करता है तब भी उस आचार्यगादी से उसे हटाने का उपाय करना आवश्यक है नहीं तो उसके साथ सम्बन्ध विरक्तों को छोड देना चाहिए ॥२३॥

**समाजदूषकः साधुर्यः कश्चित्स्यात्सुधीरपि ।**
**स त्याज्यः सुविरक्तैश्च श्रीवैष्णवैः सनातनैः ॥२४॥**

संसम्यगजन्ति स्वीयधिषणानुगुणं स्वधर्मं जानन्तिप्राणिनो यस्मिन्नसौ समाजः । संपूर्वकादजधातोर्गत्यर्थकात् बाहुलकादधिकरणे घञ् प्रत्ययः । अन्यथा भावे घञ् विधानादधिकरणे स न स्यादिति । ननु यत्र केवलोगत्यर्थ कोधातु स्तत्रैव गतिपदेनज्ञानादयश्चत्वारो गृह्यन्ते इति यत्रान्यार्थेन सहगत्यर्थः तत्र केवलगमनमेवगृह्यते इतिश्रूयते तर्हि कथमिह पर्याये ज्ञाधातुप्रयोग इति मैवम् 'सेधतेर्गतौ' इति पा. सूत्रेगतिग्रहणसामर्थ्यात् प्रतीयते धातूनामनेकार्थत्वमितिपक्षे नहिकाऽपिक्षतिः । यदिधातूनामेनकार्यत्वं न स्वीक्रियते पाणिनिनाकथन्तर्हि तत्र गतिग्रहणमुपात्तन्तेनसेधतेरित्येव उच्येत तेनैवगतिलाभः स्यात् कथं ! धातोर्गत्यर्थत्वात् । अथवा सम्यगजन्तिस्वधिषणाऽनुगुणं निजधर्मं क्षिपन्ति दूरीकुर्वन्ति प्राणिनो यस्मिन् ससमाजः । इह संपूर्वकात् क्षेपणार्थादजधातोः स एव प्रत्ययः । उभयविधधात्वर्थत्वात् । समाजे उभयविध प्राणिवर्तमानाच्च । अथवा सम् ईषत् अजन्तिनिजमत्यतुकूलं स्वीयं धर्मं जानन्ति क्षिपन्ति वा प्राणिनो यस्मिन् स समाजः । ईदृशा अपि जनाः समाजेभवन्त्येवकाऽत्रविचारणावर्तते । ननु समुपसर्गः केवलः सम्यगर्थे दृश्यते कथमिह ईषत्, अर्थकरणं घटते उच्यते धातूनामिवोपसर्गाणामपि ह्यनेकार्थत्वाद्दोषाभावान्नपूर्वपक्षावसरः । 'निपाताश्चोपसर्गाश्चधातवश्चेतितेत्रयः । अनेकार्थाः स्मृताः सन्ति पाठस्तेषां निदर्शनमितिशिष्टोक्तिः । यद्यपि अन्येषां पश्वतिरिक्तानां प्राणिनां वृन्दं समाज इत्युच्यते इति कोषस्तथापीहसमाजपदेन सनातन वैदिकधर्मावलम्बकश्रीरामानन्दीयश्रीवैष्णवसमाज एव गृह्यते कथमस्य ग्रन्थस्य

श्रीरामानन्दवंशोद्भवश्रीवैष्णवशिरोमणिश्रीस्वामिकूवाचार्यमहाराजप्रणीत त्वात् । दूषयतीतिदूषकः समाजस्य दूषकः समाजदूषकः । समाजलाञ्छनकर्ता । कीदृशं समाजदूषकत्वम् ? स्वेष्टदेवनिन्दाकर्तृत्वम् । स्वगुरुजुगुप्साविधायित्वम् । स्वपरम्परागतस्वीयधर्मत्याजकत्वम् । सत्यामपि शक्तौस्वेष्टदेवनिन्दास्वधर्मावज्ञा श्रवणेसमाधानाकरणत्वम् । समाजबलेनलब्धद्रव्येन स्वारामपूर्वकालस्यसहितं समयं गमयन् समाजोपरिसमागताक्षेपोत्तरादायित्वम् स्वदेशिकशिक्षितपथानादर कत्वमित्यादिकं बहुविज्ञेयमिति । यः कश्चित् साधुः स्यात् भवेत् सु शोभनाधीः शेमुषी अन्तःकरणं वा यस्य स सुधीः । विद्वानपि सः, विगतं रक्तं विषयेषु प्रेम येषान्ते विरक्ताः शोभनाश्च ते विरक्ताश्च । रक्तमिह भावोक्तप्रत्ययः । सनाभवा इति सनातनास्तैः अनाद्यनन्तश्रीरामश्रीसीताप्रवर्तितपरम्परागतैः श्रियाविशिष्टाः श्रीविशिष्टाः श्रीविशिष्टाश्च ते वैष्णवाश्च तैः । त्यक्तुं योग्यः त्याज्यो बहिष्कार्य्यः स्यादिति योजनीयम् ॥२४॥

अपने समाज का दूषक जो कोई विद्वान् भी साधु है तो ऐसे को सनातन विरक्त श्रीवैष्णवों को उसे छोड देना चाहिए। उस विरक्त समाज में जिसमें साधुता है वह चाहे संस्कृत पढा हो या न पढा हो जो अपने पूर्वजों के विरक्त मार्ग की रक्षा कर रहा है प्रभु सेवा पूजा करता है आए गए अभ्यागतों का यथा शक्ति सत्कार करता है सीधा सादा साधु है उसमें कोई निन्दित आचरण नहीं है ऐसों की समाज का पढा लिखा विद्वान् साधु लोगों से कहे कि 'यह समाज मूर्खो का है ऐसों को कुछ क्यों देना स्थान में क्यों रहने देना मन्दिर बनाया कि पेट के धन्धे कर रखे हैं' ऐसे विद्वान् साधु को त्यागना ही ठीक है। आज के जमाने में पढे लिखे साधुओं की धर्म में प्रभु सेवा पूजा में प्रेम बहुत कम ही देखा जाता है। विरक्त साधुओं की भाषा समझें ? सौ दिन का पण्डित एक दिन का मुण्डित बराबर होता है। जहाँ प्रभु सद्भक्ति नहीं है परोपकार नहीं है वह विद्वत्ता क्या काम की। सोते हुए साधु को जगाया जाय तो वह सोया हुआ साधु 'राम राम सीताराम सीताराम' कहके उठ बैठता है उसका नाम है साधु जो सोते हुए भी प्रभु को नहीं भूलते हैं ॥२४॥

**सङ्गतिर्यत्नतः कार्य्या परस्परं सुवैष्णवैः ।**
**स्थानम्प्राप्यस्वधर्मो न हेयोबुद्धिविशारदैः ॥२५॥**



बुद्धौकर्तव्याकर्तव्यविचारेविशारदाः प्रवीणास्तैः । सुप्सुपेतिसमासः सप्तमीयोगविभागपक्षे । तस्य भाष्येऽदर्शतात् । ननु योगविभागादर्शने प्रमाणाभाव इति मैवम् 'सिद्धशुष्कपक्वबन्धैश्च' इति पाणिनिसूत्रमेव प्रमाणमिति हेतोरन्यथा सप्तमीयोगविभागेनैव साङ्कास्यसिद्ध इत्यादिलक्ष्यसिद्धौतदर्थं तत्सूत्रप्रणयनानर्थ कत्वात् । शोभनाश्चते वैष्णवाश्चतैः । प्रादिसमासः । परश्च परश्चेति परस्पर-मन्योऽन्यम् । यत्नेनेति यत्नतः । बहूपायेनसङ्गतिर्मेलनं कार्य्या विधेया । तदुक्तम् 'सङ्घेशक्तिः कलौयुगे' इति यत्र मेलनमन्योऽन्यं वरीवर्तितत्रैव सर्वकार्यं भवितु मर्हति नान्यत्र यथा तृणसमूहनिर्मितयारज्ज्वामत्तदन्तिनोऽपिबध्यन्ते नैकेनतृणेन तथासम्भवोऽस्तीति तथैव प्रकृतेऽपि विज्ञेयम् । स्थानं प्रतिष्ठितं पदं प्राप्यलब्ध्वा स्वस्यधर्मः स्वधर्मः न हेयः न त्याज्यः । यत्र स्वधर्मत्यागस्थानं श्मशानवासवद्धेयम् ॥२५॥

विरक्त श्रीवैष्णवों को प्रयत्नपूर्वक आपस में मेल अवश्य करना चाहिये, क्योंकि 'सङ्घेशक्तिः कलौयुगे' यह आप्त महर्षियों का सिद्धान्त है । कलियुग में आपस के मेल में सर्वशक्तियां हैं। जहां मेल है वहीं सब कुछ है। स्थान को पा करके बुद्धिमान् मनुष्यों को अपना धर्म नहीं छोडना चाहिए, कारण कि जब विरक्त वेष लिया जाता है तब सांसारिक विषयों से ममता हटा के ही विरक्त बना जाता है। विरक्तों के वेष-भूषा को नहीं त्यागना चाहिए। भोजन-वस्त्र आदि तो लेना ही पडता है सो भी भोजन-वस्त्र साधारण ही होना चाहिये। प्रातःकाल में सूर्य उदय से प्रथम ही उठ जाना चाहिए, स्नान सन्ध्या-वन्दन करके प्रभु सेवा पूजा करना, प्रभु को निवेदन विना किए जल आदिक कोई भी चीज नहीं लेना, नहीं पीना कुछ भी नहीं भोजन करना। और जनता को सदुपदेश देना यह विरक्त साधुओं का परम कर्तव्य है ॥२५॥

**भगवद्वैष्णवेभ्यश्च यश्छद्मकारकोजनः ।**
**अधः पतनमायाति सहस्त्रं जन्मनिश्चयम् ॥२६॥**

भगवांश्च वैष्णवाश्चेतीतरेतरोभयपदार्थप्रधानोद्वन्द्वः । तेभ्यः करोतीतिकारकः छद्मनः कारकः कपटविधायकः योजनोऽस्तीति क्रियापदशेषः । स जनः निश्चयं यथा स्यात् तथा सहस्त्रं सहस्त्रसंख्याकं जन्म अत्यन्तसंयोगेद्वितीया । अधः

पतनम् अधोगतिमायातिप्राप्नोति । किं छद्मकारकत्वम् तदाह-भगवदर्थ मिलितः पदार्थस्तं तस्मावदत्वास्वयमेवभोक्तृत्वम् । अथवा नाममात्रमल्पं वस्तु तस्मैदत्त्वास्वयमेवसर्वमहद्वस्तूपयोक्तृत्वम् । एवं वैष्णवानामपि ज्ञेयम् । अथवा तत्सन्निधौप्रतिज्ञापूर्वकं कथनं नाहमेवं करिष्यामि पुनस्तत्करणमित्यादिज्ञेयम् २६

जो महान्तजन भगवान् श्रीसीतारामादि से तथा श्रीवैष्णवों से छल कपट करते हैं तो वे महान्तजन निश्चय ही अनन्तजन्मों तक अधःपतन को प्राप्त करते हैं । भगवान् से तथा विरक्त श्रीवैष्णवों से छल-कपट यह है कि प्रभुजी की दया से ही धन सम्पत्ति मिलती है । किसके लिए धन-सम्पत्ति मिलती है ? परमार्थ के लिए आए-गये अभ्यागत विरक्त श्रीवैष्णवों के लिए नाकि केवल महान्त के लिए ही । धर्म की सम्पत्ति पाके चाहे विरक्त हों, चाहे गृहस्थ हों दोनों अन्धे हो जाते हैं । धन सम्पत्ति के मद में भगवान् को तथा विरक्त श्रीवैष्णवों को कुछ समझते ही नहीं हैं यही अन्धापन है । अपने अनेक सुख भोगते हैं । भगवान् तथा विरक्त श्रीवैष्णव साधुओं का ध्यान नहीं रखते, ऐसे स्वार्थी पृथ्वी का भारभूत हो जाते हैं ॥२६॥

**निखिलभुवनजन्मस्थैर्यसंहारकर्तुः**
**भजनमननलब्धेर्वेदबुद्धेश्च विष्णोः ।**
**जनकुमुदसुधांशोर्ब्रह्मरामस्यमन्त्रः**
**भवजलधिसुसेतोर्जीवमात्राय देयः ॥२७॥**

निखिलानि च तानि भुवनानि निखिलभुवनानि इति विशेषणसवासः स्थिरस्य भाव इतिस्थैर्यम् स्थितिः । ब्राह्मणादित्वात्ष्यञ् प्रत्ययः तोःषीति सन्ध्यभावः । जन्म च स्थैर्यञ्च संहारश्चेति जन्मस्थैर्यसंहाराः । निखिलभुवनानां जन्मस्थैर्यसंहाराः निखिलभुवनजन्मस्थैर्यसंहाराः करोतीतिकर्ता तेषां कर्ता तस्य इत्युत्तरपदार्थप्रधानस्तत्पुरुषः । अनेन 'यतो वा इमानि भूतानि जायन्ते' इति श्रुतिर्बोध्यते मङ्गलाचरणे विषयोऽयमुक्तोऽपि द्विर्बद्धं सुबद्धं भवतीति न्यायबोधनार्थः । यत इह उपादानपञ्चमीनिमित्तपञ्चमी सहकारिकारणपञ्चमीचेति वेदान्त समयः । नैयायिकमते निमित्तपञ्चम्येवतन्मते परमाणूनां जगदुपादानकारणत्व स्वीकारात् । भजनञ्च मननञ्च भजनमनने ताभ्यांलब्धिः प्राप्तिर्यस्य स तस्य । अनेन 'आत्मावारेद्रष्टव्यः श्रोतव्योमन्तव्योनिदिध्यासितव्यः' इति श्रुतिर्बोध्यते ।



आत्माजीवेधृतौदेहेस्वभावेपरमात्मनि इति कोषः । अत इहात्मपदेनपरमात्मा श्रीरामचन्द्रोगृह्यते । योगादिना तत्साक्षात्कारगुरुद्वारातद्यशस्तत्माहात्म्यश्रवणमननादिनैवतत्प्राप्तिर्भवतीति वेदान्तसमयः । वेदाः बुद्धिर्यस्य स तस्य बुद्धिशब्द इह निःश्वासोपलक्षकः । विष्णोः सर्वव्यापकस्य । द्विर्वद्धं सुवद्धं भवतीति न पुनरुक्तिदोषः जनः सद्भक्तः स एव कुमुदम् जनकुमुदम् । मयूरव्यंसकादित्वात् समासः । तस्मै सुधांशुरिव तस्य । उपमितसमासः । भव एव जगदेवजलधिः भवजलधिस्तस्मिन् सुसेतुस्तस्य । ब्रह्मैवरामः ब्रह्मरामस्तस्य मन्त्रः । जीव एव जीवमात्रं तस्मैसकलजीवायदेयोवितरणीयः भगवद्भक्तौ सर्वजीवाधिकारोऽस्तीति 'भक्त्यातुतोष भगवान् गजयूथपाय' इतिव्यासदेववचनात् 'सर्वे प्रपत्तेरधिकारिणः सदा शक्ता अशक्ता पदयोर्जगत्प्रभोः । अपेक्ष्यते तत्र कुलं बलं च नो न चापि कालो न च शुद्धतापि वै' इत्यानन्दभाष्यकारोक्तेश्च ॥२७॥

समस्त भुवनों के उत्पत्ति स्थिति एवं संहार को करनेवाले संहार शब्द का यहां यह अर्थ है कि प्रलयकाल में समस्त चेतन तथा जड पदार्थ नामरूप रहित यह देव है, यह मनुष्य है ऐसे नाम और यह काला है, यह गोरा है, यह मोटा है, यह पतला है, ऐसे रूप रहित कहते हैं । नामरूप विभाग रहित समस्त चेतन तथा जड पदार्थ रहते हैं । सर्वथा ही समस्त पदार्थों का अभाव नहीं रहता है । कारण कि उद्दालक महर्षि का पुत्र श्वेतकेतु जब याज्ञवल्क्य महर्षिजी के पास पढने को गया और पढ के अपने पिताजी के पास आया तब पिता ने पूछा कि पढ आए हो, कहो तो यह समस्त चेतन-जड पदार्थ नित्य है कि अनित्य प्रलयकाल में ये रहते हैं कि सर्वथा नष्ट हो जाते हैं, तब श्वेतकेतु अपने गुरु याज्ञवल्क्यजी के पास जाके पूछा अपने पिता के प्रश्न को, तब गुरुजी ने कहा कि सभी कालों में सभी रहते हैं नष्ट तो कभी होते ही नहीं है । सृष्टिकाल में नामरूप विभाग के योग्य रहते हैं । यह देव है, यह मनुष्य है, यह काला है, यग गोरा है, यह मोटा है, यह पतला है, यह विभाग रहता है । प्रलयकाल में नामरूप विभाग नहीं रहता है किन्तु पदार्थ तो सभी सर्वदा रहते ही हैं । छान्दोग्य उपनिषद् में गुरुजी शिष्य से कह रहे हैं कि '**सदेव सौम्येदमग्र आसीदेकमेवाद्वितीयम्**' हे सौम्य हे शिष्य सृष्टि के पहले प्रलयकाल में यह दृश्यमान चेतन जड समस्त पदार्थ सत्य ही रहा है और 'एकम्' माने नामरूप विभाग

रहित तथा और अद्वितीयम् माने ब्रह्म से अतिरिक्त अन्य के आश्रित नहीं था किन्तु ब्रह्म के ही आश्रित था। इससे नित्य ही है समस्त चेतन जड पदार्थ। वही बनाना भेद है नामरूप का (असदेवेदमग्र आसीत्) यहां असत् शब्द नामरूप विभाग रहित परक है। सर्वथा समस्त पदार्थों का अभाव नहीं हो जाता है। (नह्यसतः सज्जा यते) हे शिष्य! असत् से सत् नहीं होता है। कभी भी किसी भी अवस्था में सर्वथा पदार्थों का अभाव होता ही नहीं है। यही बात गीता स्मृति में लिखी है-**नासतो विद्यते भावो ना भावो विद्यते सतः** असत् पदार्थ की सत्ता नहीं होती है और सत् पदार्थ की असत्ता नहीं होती है। प्रलयकाल में नामरूप नहीं प्रतीत होते हैं और सृष्टिकाल में नामरूप विभाग का अभाव नहीं होता है। प्रकृत में आते हैं भजन मनन से प्राप्तव्य और वेद निःश्वास वाले श्रीरामरूपी विष्णु भक्तरूपी कुमुद के लिए चन्द्रमा संसाररूपी समुद्र से पार होने के लिये पुल के माफक परब्रह्म श्रीरामजी के षडक्षर तारक मन्त्रराज को समस्त जीवों के देना चाहिये ॥२७॥

**सच्चारित्रदयाशमादिनिलयः श्रीरामभक्तिप्रियः**
**दम्भासत्यविवर्जितोमितवचाः कामादिशत्रुत्यजः।**
**सौम्योविश्वजनीन आर्षमतगोवक्ता च सद्वर्त्मनः**
**कृत्याकृत्यमतिः पुनातिभुवनं वा ईदृशोवैष्णवः ॥२८॥**

श्रीराममन्त्राधिकारित्वमुक्त्वा जगत्पावनकर्तृत्वमाहाचार्यस्वरूपमाह-चरित्रमेव चारित्रं स्वार्थेऽण् प्रत्ययः। सच्चतच्चारित्रञ्च सच्चादित्रम् शम आदिर्येषान्तेशमा दयः शमदमोपरतितितिक्षासमाधानश्रद्धाविवेकविरागाः सच्चारित्रञ्च दया च शमाद यश्चतेषां निलयो गृहम्। श्रीरामस्यभक्तिः श्रीरामभक्तिः श्रवणकीर्तनस्म रणादि स्वरूपा सा प्रिया यस्य सः। न सत्यमित्यसत्यं मिथ्या। दम्भश्च असत्यञ्च दम्भा सत्ये ताभ्यां विवर्जितः। पाखण्डानृतरहितः। मितं स्वल्पं वचोवचनं भाषणञ्च यस्य सः। सत्याय मितभाषणमिति स्मरणात्। बहुभाषीमिथ्याऽपि यदाकदाचिद्वदतितन्निषिद्धम्। नानृतं वदेदितिस्मृतेः। कामोरतिप्रियः। स आ दिर्येषान्तेकामादयः कामक्रोधलोभाः। त एव शत्रवः। त्यजतीतित्यजः पचा दित्वाद च् प्रत्ययः। कामादिशत्रुणां त्यजः कामादिशत्रुत्यजः। तत् त्यागाश्रयः। 'त्रिविधं नरकस्येदं द्वारं नाशनमात्मनः। कामः क्रोधस्तथालोभस्तस्मादेतत्त्रयं त्य



जेदितिभगवदुक्तेः। सौम्यः सज्जनः। विश्वेच ते जनाश्चविश्वजनाः सकलप्राणिनः तेभ्योहितः विश्वजनीनः 'आत्मन् विश्वजनभोगोत्तरपदात्खः' इति ख प्रत्ययः। ऋषीणामिदमार्षम् 'तस्येदम्' इत्यण् प्रत्ययः। आर्षञ्चतन्मतञ्च आर्षमतं तद् गच्छति जानातीति आर्षमतगः। सच्च तद्वर्त्मच सद्वर्त्मतस्यवक्ता शुभोपदेशकः। कृत्यं च अकृत्यञ्च कृत्याकृत्येतयोर्मतिर्विवेकोयस्य सः। च हेतौ वै शब्दोनिश्च येस्तः। ईदृशः उक्तलक्षणोपलक्षितः वैष्णवः भुवनमितिलोकम् जातावेकवच नम्। पुनाति पवित्रयति नान्यः। यस्तु स्वयमेव संसृतिजन्यभोगभोक्तृत्वमल मलिनोवर्तते सकथं भुवनपावनकर्तृत्वे समर्थोभवितुमर्हति तेजस्तिमिरयोरेकत्र स्थितिरिव वदतोव्याघातात्। अतः सत्त्वगुणविशिष्टेवैष्णवो भवेदितिभावः। यः स्वयवेवानृतोक्तिपूर्वकव्यभिचारवात् सकथमन्यं सत्यसदाचारं बोधयितुमलं भवितुमर्हति ॥२८॥

सदाचार दया शम दम आदिवाला, श्रीरामजी की भक्ति प्रियवाला, पाखण्ड मिथ्या से रहित कामपूर्ति ही बोलनेवाला, काम-क्रोधादि शत्रुओं को छोडनेवाला, सम्य सरल स्वभाववाला जगत् के प्राणियों के लिए हितकारक, ऋषियों के सिद्धान्त को माननेवाला, सच्चे मार्ग का उपदेशक कर्तव्याकर्तव्य के विचारवाला ऐसा विरक्त श्रीवैष्णव ही जगत् को पवित्र करता है। जो स्वयम् भोगी-विलासी है वह किसी को भी पवित्र नहीं कर सकता है। जो खुद ही संसार के मोह-माया में पडा है वह क्या किसी को कुछ भलाई कर सकता है? ॥२८॥

**श्रीरामार्पितमन्नं यद्देवदुर्लभमस्तितत्।**
**भुञ्जते भाग्यवन्तः श्रीतुलसीदलमिश्रितम् ॥२९॥**

भगवत्प्रसादमहत्वंवर्ण्यते श्रीरामाय अर्पितं श्रीरामार्पितं तत् यदन्नम् अद्य ते खाद्यते यत् तदन्नम्। भक्षणार्थकाददधातोर्बाहुलकात् वर्तमानकाले कर्मणि क्त प्रत्ययः। गलबिलाधः संयोगानुकूलव्यापारो यत्र जायते तत् सर्वमन्नपदेन गृह्यते इति विद्वत् कथनमस्ति तदन्नम्। देवेभ्योदुर्लभंदेवदुलभंतत् अस्ति वर्तते। श्री तुलस्यादलं श्रीतुलसीदलन्तेन मिश्रितंमिलितम् तत् अन्नम् प्रशस्तं भाग्यमस्त्येषां ते भाग्यवन्तः प्राणिनो भुञ्जते भक्षयन्ति नान्ये यद्भगवदर्पितान्नं देवेभ्योऽपि दुर्लभं वर्तते तत् कथं हि भाग्यहीनाः प्राप्तुं शक्नुवन्तीति। अनेन सूच्यते भग

**वदनर्पितं किमपि न भोक्तव्यमिति ॥२९॥**

जो श्रीसीतारामजी को अर्पण किया गया श्रीतुलसीदल से युक्त अन्न है, प्रसादरूप भोजन है वह भोजन अन्य देवताओं को भी दुर्लभ है ऐसे भोजन को भाग्यवान् जीव ही पाते हैं सभी जीव नहीं । जिस वस्तु में तुलसीपत्र नहीं पडता है ऐसे अन्न का विरक्त श्रीवैष्णव अथवा गृहस्थ श्रीवैष्णव ग्रहण नहीं करते हैं यही अनन्यता है भगवान् या धर्म में ॥२९॥

**श्रीरामकृष्णमूर्तिः सच्छालग्रामाकृतिस्तथा ।**
**पूज्याध्येयासदाभक्त्या श्रीवैष्णवैर्जगद्धितैः ॥३०॥**

जगतोहितं जगद्धितं तदस्त्येषां ते जगद्धितास्तैः । अर्श आदित्वादच् प्रत्ययः । **लोकहितकारिभिः श्रीवैष्णवैः । भक्तानां पापानिकर्षतीतिकृष्णः भक्तजनपापनाशकः । रामश्च कृष्णश्च रामकृष्णौ श्रियाविशिष्टौ श्रीविशिष्टौ श्रीविशिष्टौचतौरामकृष्णौ च श्रीरामकृष्णौमध्यमपदलोपि विशेषणसमासः । श्रीरामकृष्णयोः मूर्तिः श्रीरामकृष्णमूर्तिः । तथा शालग्रामस्याकृतिः प्रतिमाविशेषः सतीचासौशालग्रामाकृतिश्च इति सच्छालग्रामाकृतिः खण्डनरहिततन्मूर्तिः । भक्त्या अनन्यभक्त्या इति शेषः । केवलभक्तिपदोपादाने यत्रहृढा भक्तिनास्ति तत्र व्यभिचारः स्यात् तत्फलाभावादिति अनन्यपदयोजना । सदानित्यं । पूजयितुं योग्या पूज्या अर्च्या तथा ध्यातुं योग्याध्येयाचिन्त्या अस्तीतिशेषः ॥३०॥**

जगत् के हितकारक श्रीवैष्णवों को पवित्र अखण्ड श्रीरामकृष्णादि की दिव्य मूर्ति का तथा पवित्र श्रीशालग्राम की मूर्ति का हमेशा भक्तिपूर्वक पूजन तथा ध्यान करना चाहिये । श्रीरामानन्दीय श्रीवैष्णव अपने इष्टदेव श्रीसीतारामजी श्रीलक्ष्मणजी तथा श्रीहनुमानजी इन से ही अपनी इस लोक की तथा परलोक की उन्नति चाहते हुए अन्य देवी-देवताओं की निन्दा नहीं करते हैं। कारण कि उदार भाववाले होते हैं । सबको यथाशक्ति आदर देते हैं चाहे विरक्त हों या गृहस्थ यही श्रीरामानन्दीय श्रीवैष्णवों में विशेषता है ॥३०॥

**प्रतिष्ठाभगवन्मूर्तेः कार्या श्रीवैष्णवैर्बुधैः ।**
**तदन्यैः स्थापिता सा चेत्संस्कार्य्या वैष्णवैः पुनः ॥३१॥**

**भगमैश्वर्य्यादिकं षड् विधं यस्यास्तीति** 'ज्ञानशक्तिबलैश्वर्यवीर्यतेजांसि



**षड्गुणाः । भगवत्वेनेरिता सन्ति श्रीरामे भगवान् स तत्' इत्यादिरूपेण जगद्गुरु श्रीगङ्गाधराचार्योक्तेः भगवान् श्रीरामचन्द्रादिः तस्य मूर्तिस्तस्याः प्रतिष्ठा श्रीवैष्णवैः विरक्तश्रीवैष्णवसम्भवेच्चेत् तैरेव तदभावेगृहस्थश्रीवैष्णवैः । बुधैः पण्डितैः बुधपदमुभयत्रयोजनीयम् । वैखानशनारदपञ्चरात्रादिदिशावेदमन्त्रानुगुणमिति शेषः तेभ्यः श्रीवैष्णवेभ्योऽन्ये शैवादयः । तदन्यैः सा भगवन्मूर्तिः । चेद्यति स्थापिता वर्तते तर्हि वैष्णवैः अधिष्ठातृभिः सा संस्कार्या अस्तीतिशेषः । प्राचीनप्रथेयं वर्तते श्रीसम्प्रदायगौरवोचिता सा नत्याज्येतिभावः ॥३१॥**

भगवान् श्रीरामकृष्ण नारायणादि की मूर्तियों की प्रतिष्ठा श्रीवैष्णव पण्डितों से ही करवानी चाहिए विरक्त श्रीवैष्णव पण्डित हो चाहे गृहस्थ श्रीवैष्णव होवें तो भी भगवान् की मूर्तियों की प्रतिष्ठा हो सकती है जिन जिन भगवान् की मूर्तियों की प्रतिष्ठा करवानी है उन उन भगवान् के वैदिक तथा पौराणिक दोनों मन्त्रों के जानकार श्रीवैष्णव पण्डित होना चाहिए । ये श्रीवैष्णव विरक्त होवें चाहे गृहस्थ होवें यह विचार नहीं है । यदि श्रीवैष्णव पण्डितों से अतिरिक्त शैवशाक्त पण्डितों से भगवान् की मूर्तियों की प्रतिष्ठा करवाई गई है तो ऐसी मूर्तियों का श्रीवैष्णवों को चाहिए कि फिर से श्रीवैष्णव पण्डितों से संस्कार करवाना चाहिये नहीं तो उन मूर्तियों में वस्तुतः तेज नहीं आता है। विना रहस्य जाने हुए कार्य व्यर्थ होते हैं ॥३१॥

**अन्यथासाऽनमस्कार्य्यातथोपास्तिविवर्जिता ।**
**सा च भवति निस्तेजा भानूदये प्रदीपवत् ॥३२॥**

**अन्यथा यदि भगवत्मूर्तिः शैवादिपण्डितैः स्थापिता शैवादिविधिना ते हि श्रीसम्प्रदायविधानाभिज्ञा भवन्ति कथन्तद्विधिना किमपि कार्य्यं कर्तुं समर्था भवेयुः । अतः सा मूर्तिः श्रीवैष्णवैरनमस्कार्या नमस्कारानर्हा तथा उपास्तेः उपासनाया विवर्जिता उपास्तिविवर्जिता उपासनारहिता वर्तते इतिशेषः । सा च शैवादिविधिना शैवादिपण्डितस्थापिता भगवन्मूर्तिः श्रीवैष्णवाभीष्टदाने निर्गतं तेजः सामर्थ्यं यस्याः सा निस्तेजाः समर्थहीना । भानोः सूर्यस्य उदयोभानूदयस्तस्मिन् प्रदीपस्येव इति प्रदीपवत् तत्सदृशी भवति । अतः श्रीसम्प्रदायविधिना श्रीवैष्णवपण्डितैरेवस्थापनीया भगवन्मूर्तिरितिफलितं भवतीति ॥३२॥**

यदि श्रीवैष्णव पण्डितों से अतिरिक्त शैव शाक्त पण्डितों से ही भगवान्

श्रीरामा दि की मूर्तियों की प्रतिष्ठा करवाई गई है किन्तु फिर से श्रीवैष्णव पण्डितों से संस्कार नहीं करवाया गया है तो ऐसी भगवान् श्रीरामादि की मूर्ति नमस्कार के योग्य नहीं है तथा उपासना के योग्य भी नहीं है। शैव-शाक्त पण्डितों से प्रतिष्ठा की गई भगवान् श्रीरामादि की मूर्ति फिर से श्रीवैष्णव पण्डितों से संस्कार नहीं करवायी गई है तो वह मूर्ति विलक्षण तेज रहित हो जाती है जैसे सूर्य के उदय हो जाते ही दीवा तेज रहित फीके हो जाते हैं यह ध्यान रखना चाहिए। जिसको अपने सम्प्रदाय का गौरव नहीं है वह मनुष्य ही नहीं है यदि कोई प्रश्न करे की श्रीवैष्णव पण्डित न मिल सके तो क्या किया जाय इसका उत्तर यह है कि श्रीवैष्णव पण्डितों की कमी नहीं है श्रीवैष्णव पण्डितों को ढूँढना चाहिए उनका पता लगाना चाहिए आदर करना चाहिए क्योंकि श्रीवैष्णव पण्डित मिलेंगे 'जेहि के जेहि पर सत्य सनेहू। सो तेहि मिलहि न कछु सन्देहू॥ यह क्या है गोस्वामी श्रीतुलसीदासजी महाराज का सदुपदेश ॥३२॥

**सार्धहस्तत्रयं वस्त्रं सकौपीनं श्रुतीरितम्।**
**तदेवधार्य्यमस्ति श्रीवैष्णवानां शुभावहम् ॥३३॥**

**विरक्तश्रीवैष्णवसाधुवस्त्रधारणविधिरुच्यते-कौपीनेन सहवर्तते इति सकौपीनम् गुदोपस्थाच्छादनसमेखलवस्त्रखण्डसहितम्। हस्तस्य त्रयम् हस्तत्रयम् त्रिहस्तसमुदायः। अर्धेन सहवर्तते सार्धं सार्धञ्च तत् हस्तत्रयञ्च सार्धहस्तत्रयमिति विशेषणसमासः। सार्धहस्तत्रयमस्तियस्मिन् तत् सार्धहस्तत्रयम्। अर्धहस्ताधिकत्रिकरपरिमितम्। शुभं स्वधर्ममर्यादारूपं मङ्गलम् आवहतिजनयतीतिशुभावहम् स्ववेषशोभाकरं श्रुतिषु सदुपनिषद्रूपासु ईरितम् विहितम् श्रुतीरितम् वस्त्रम् यदस्तीतिशेषः। तदेवसम्प्रतिनीर्णितमेव श्रीवैष्णवानां धार्यमस्ति विरक्तानामितिशेषः। गृहस्थ श्रीवैष्णवानां तथाविधवस्त्राविधानात्। सर्वेश्वरश्रीरामस्य चरणपूजनसाधनभूतशरीररक्षार्थमन्यदपि सच्छास्त्रविहीतं वस्त्रनिजवेषानुकूलमेव धार्य्यं नोच्छास्त्रमितिभावः ॥३३॥**

जो कौपीन के सहित वेद 'सात्विक पुराण' सात्विक स्मृतियों में वर्णन किया गया है वही कौपीन के सहित श्रुति आदि में वर्णन किया गया साढे तीन हाथ का मान-मर्यादा के संरक्षक यथा शास्त्र यथा नियम काषाय-शुक्ल श्रीगुरुदेव प्रदत्त वस्त्र



को कटिभाग में विरक्त साधुओं को धारण करना चाहिए ॥३३॥

**धौतं कच्छयुतं नोहि धार्य्यं विरक्तवैष्णवैः।**
**नोतर्हि विमलेधर्मे दोषोलगतिनैजके ॥३४॥**

**सम्प्रतिनिषेधवाक्यघटितविधिरुच्यते-र्हिनिश्चयेवर्तते विगतं रक्तम् संसृतिजन्यभोग्यविषयेषु प्रेमयेभ्यस्तेविरक्ताः। वेवेष्टिसर्वत्र व्याप्नोतीति विष्णुः सर्वव्यापकः सर्वेश्वरः श्रीरामः। विष्णुः सर्वव्यापकः श्रीरामोभक्तिर्भजनीयोऽस्त्येषां ते वैष्णवाः श्रीरामभक्ताः। विरक्ताश्चतेवैष्णवाश्च विरक्तवैष्णवाः। तैः कच्छे न युतं कच्छयुतम् गृहस्थसदृशमग्रभागतोधौतखण्डं गृहीत्वाकटिपश्चाद्भागेवेष्टनमितियावत्। धौतं नो नहिधार्य्यं परिधेयम्। विपक्षेदोषमाह नोतर्हि विमलेपवित्रे निज एवनैजः स्वार्थेऽण् ततः स्वार्थे कः नैजकेस्वकीयेधर्मे श्रीशुकदेवाद्याचरिते विरक्तश्रीवैष्णवप्रथिते दोषोलाञ्छनं लगति। धौतपदमिह गृहस्थधार्य्यविरक्तश्रीवैष्णवपरिधानविरुद्धकञ्चुकोष्णीषादीनामुपलक्षणम् ॥३४॥**

विरक्त श्रीवैष्णवों को लाँग के सहित धोती नहीं पहिरना चाहिए। न ही तो पवित्र विरक्त श्रीवैष्णवों के धर्म में दोष लगेगा क्योंकि लाँग के सहित धोती तो गृहस्थ वर्ग को पहिरना चाहिए। विरक्त साधुओं को लाँग के सहित धोती नहीं पहिरना चाहिए। आज तो बहुत से विरक्त श्रीवैष्णव साधु लाँग ले सहित धोती पहिनते हैं। यह विरक्त समाज के खिलाफ है। आज के विरक्त साधु मनमाने हो गए हैं। भ्रष्ट भी हो रहे हैं ॥३४॥

**स्ववेषोलोभतोभीतेर्नहेयोवैष्णवैः समैः।**
**मूर्खोभवति सत्याज्यस्तथासतिस्वधर्महा ॥३५॥**

**समैर्निखिलैः वैष्णवैः स्वस्य वेषस्ववेषं लोभेनेतिलोभतः। आद्यादित्वात् तसिः। भीतेर्भयात् नहेयं नहित्याज्यम्। स्ववेषत्यागः स्वधर्मत्यागः स निषिद्धः 'श्रेयान् स्वधर्मोविगुणः परधर्मात्स्वनुष्ठितात्। स्वधर्मे निधनं श्रेयः परधर्मो-भयावहः' इति भगवदुक्तेः। अतः स्ववेषत्यागोनहि श्रेयः करः। विपक्षेदण्डंमाह तथासतिलोभेन भयाच्चस्ववेषत्यागेसति स्वस्यधर्मः स्वधर्मः स्वधर्मंहन्तीतिस्वधर्महा निजधर्मविनाशकः मूर्खः कर्तव्याकर्तव्यविवेकहीनः स त्याज्यः स्ववेषप्रतिपालकैः श्रीवैष्णवैरितिशेषः। लोभत इहहेतौतृतीया द्रव्यादिलोभेनस्व**

वेषत्यागोदरीदृश्यतेऽतोद्रव्यादिहेतुकस्ववेषत्यागः हेयः 'न जातु कामान्नभयान्नलोभाद् धर्मं त्यजेज्जीवितस्यापि हेतोः' इत्यादिरूपेण श्रीबादरायणोक्तेः । 'हस्तिना पीड्यमानेऽपि न गच्छेज्जैनमन्दिरमिति निषेधाच्च । धर्मएवहतोहन्ति धर्मोरक्षति रक्षितः' इति स्मरणीयमित्याचार्याभिप्रायः ॥३५॥

समस्त वैष्णवों को लोभ से अथवा भय से भी अपना वेष नहीं छोडना चाहिए। अपने धर्म के वेषभूषा को छोडना बहुत बडा पाप है। ऐसी हालत में थोडे जीवन के लिए अपने धर्म को छोडनेवाला श्रीवैष्णव मूर्ख है अपने धर्म को छोड देने से श्रीवैष्णव पतित हो जाता है तो अपने वैष्णव समाज के वैष्णवों से वह अपने धर्म का विरोधी छोडने के योग्य ही है ॥३५॥

एकादशीव्रतंकार्यं श्रीरामनवमीव्रतम् ।
कृष्णाष्टमीव्रतं दिव्यं निजात्मशुद्धयेसदा ॥३६॥

श्रीवैष्णवावश्यकव्रतमुच्यते श्रीवैष्णवैरितिशेषः । निजस्यात्माऽन्तःकरणम् तस्य शुद्धिः पवित्रता तस्यै एकादश्या व्रतं एकादशीव्रतम् श्रीरामस्यनवमी श्रीरामनवमी मधुमासशुक्लपक्षागतानवमीतिथिः तस्यां व्रतम् । कृष्णस्याष्टमी कृष्णाष्टमीभाद्रमासकृष्णपक्षागता अष्टमीतिथिस्तस्यावव्रतम् । दिव्यं शुभपुण्यजनकमितिसर्वत्रयोजनीयम् । सर्वस्मिन् समये सदा नित्यं कार्य्यं विधेयम् । तत्तिथिघटितोपवासपरिपुष्टहरिभक्तितावच्छेदकावच्छिन्ननिष्ठजनकतानिरूपितजन्यताविशिष्टहरिप्रसादतावच्छेदकावच्छिन्ननिष्ठजनकतानिरूपितजन्यत्वविशिष्टपरमसुखताऽवच्छेदकावच्छिन्नप्रत्यनीकताविशिष्टान्नत्यजनमिति यावत् । तदभावेकेनचिद्विदुषादोषवदुक्तस्तथाहि 'न सन्ध्यांजानीते व्रतमपि हरेर्नैवकुरुतेत्रयीबाचोवार्तां नियतनिजधर्मं न तनुते । शिखासूत्रं नोयोऽवतिचकुरुतेहिहरिरितिंह्ययोध्यातीर्थं वाहरिहरिचनार्य्यः स कुमतिः' इत्यादिनातस्वधर्मरक्षाकार्येतिप्रतीयते ॥३६॥

श्रीवैष्णवों को पवित्र एकादशी व्रत तथा पवित्र श्रीरामनवमी व्रत तथा श्री कृष्णाष्टमी व्रत हमेशा ही अपने अन्तःकरण की शुद्धि के लिए तथा प्रभुपद साकेत धाम की प्राप्ति के लिए करना चाहिए ॥३६॥

अन्यमतं न निन्देद्धिस्वमतं मानयञ् छुभम् ।
प्राणिभिः सहबैरं नो प्रकुर्याद्वैष्णवोबुधः ॥३७॥



बुध्यतेकृत्याकृत्यं विचारयतीतिबुधः प्रेक्षाऽऽश्रयः । अवगमनार्थकबुधधातोः 'इगुपधज्ञाप्रीकिरः कः' इत्यनेनकर्तरिकप्रत्ययस्तदर्थः आश्रयः । वैष्णवः सर्वव्यापकश्रीरामभक्तः स्वस्यमतं स्वमतन्तत् । शुभश्रेष्ठं मानयतीतिमानयन् विचारयन् । न लोकेति कृद्योगकर्मषष्ठीनिषेधः । अन्येषां स्वस्मादतिरिक्तानांमतमन्यमतन्तत् न निन्देत् गर्हयेत् प्राणाः सन्तियेषान्ते प्राणिनस्तैः 'अत इनिठनौ' इतीन् प्रत्ययः । असुमद्भिः सह साकम् 'सहयुक्तेऽप्रधाने' इत्यप्रधानेतृतीयाविभक्तिः । बैरं वैमनस्यम् नोनहि प्रकुर्यात् विदध्यात् । इत्यनेन यथाविष्णुः सत्वगुणप्रधानः समदर्शी च तथैव तद्भक्तैः श्रीवैष्णवैरपि भाव्यमिति सूचितम् ॥३७॥

श्रीवैष्णव को अपने सिद्धान्त को पवित्र मानते हुए दूसरे सिद्धान्त का निन्दा नहीं करनी चाहिए और बिना अपराध किसी भी प्राणियों के साथ विरोध नहीं करना चाहिए। हाँ जो बिना अपराध के ही अपने साथ विरोध करता है उसके साथ विरोध ठीक ही है। 'हने पर हने पाप दोष न गिने' यह याद रखना आवश्यक है ॥३७॥

प्राप्ता अतिथयः सर्वे सत्कार्यायत्नतः सदा ।
यथाशक्तिनिजस्थानेवैष्णवास्तुविशेषतः ॥३८॥

निजस्य स्वस्य स्थानं निजस्थानं तस्मिन् स्वाश्रमे स्थीयतेजनैर्यस्मिन् तत् स्थानम् । गतिनिवृत्यर्थकस्थाधातोः 'करणाधिकरणयोश्च' इत्यधिकरणेल्युट् प्रत्ययः । प्राप्ता उपस्थिताः सर्वेनिखिलाः अतिथयोऽभ्यागताः । यत्नेन यत्नतः प्रयत्नेन सदानित्यम् सत्कर्तुयोग्या सत्कार्याः सम्माननीयाः । शक्तिमनतिक्रम्य यथाशक्तिः शक्त्यनुसारमिति यावत् । यथा शक्तीहपूर्वपदार्थप्रधानोऽव्ययीभावः । वैष्णवास्तु सर्वव्यापकश्रीरामभक्ताः विष्णुचिह्नशार्ङ्गाद्यायुधोर्ध्वपुण्ड्रतिलकतुलसीमालाश्रीरामतारकमन्त्रभगवत्सम्बन्धिनामधारिणश्च विशेषेणेति विशेषतोऽधिकतोयथाशक्तिसत्कार्याः सन्ति स्थानाधिपतिभिरितिशेषः । इहेयं शङ्का जागर्ति यद्ये स्वजन्मगृहं विहाय विरक्ताः श्रीवैष्णवाः संजाताः । गृहस्थाश्रमबुद्धय इतस्ततो विषयेषु धावन्ति तेन परमशान्तिर्नभवति तदभावेजन्ममरणबन्धननानादुःखहेतूपस्थितिर्भवति तद्वारणाय विरक्तत्वं गतवन्तस्तत्रापि चेन्मठाश्रमादिनिर्माणं क्रियते कथन्तेषाम्परमशान्तिर्भवितुमर्हति? सत्यमुच्यते मठाश्रमादिनिर्माणस्येदमेवप्रयोजनं यदुक्तमुपरिपूर्वमपितत्प्रयोजनमुक्तम् । यदिप्राप्तातिथिसत्काराभा

वः श्रीवैष्णवमतप्रचाराभावः सद्धर्मरक्षणाभावः स्वारामकर्तृत्वं कामक्रोधलोभादिसाम्राज्यं तदातन्निर्माणं परमदुःखायभवतीति नात्र संशयः । वैष्णवत्वेन सजातीयत्वाद्वैष्णवेविशेषत इत्युक्तम् ॥३८॥

अपने स्थान में आये हुए समस्त अभ्यागतों का यत्नपूर्वक हमेशा अपनी शक्ति के अनुसार सत्कार करना चाहिए । यदि विरक्त श्रीवैष्णव अपने स्थान में आवें तो उन विरक्त साधुओं का सत्कार विशेष करना चाहिए । कारण कि विरक्त साधुओं अभ्यागतों का कोई निश्चित स्थान तो रहता ही नहीं है इसलिए निश्चित स्थान रहित विरक्तों की सेवा विशेष करनी चाहिए । जो विरक्त साधुओं की निन्दा करता है वह मूर्ख है । दोष, गुण सभी समाज में हैं क्या कोई कह सकता है कि मेरे में कोई दोष नहीं है । सभी विरक्त साधु समान नहीं है एक से एक सिद्ध महात्मा साधु हो गए हैं हैं भी, होंगे भी । बिना पढे-लिखे भी विरक्त सच्चे साधुओं का आशीर्वाद फलदायक होता है । मैंने बहुत अनुभव किया है कि विरक्त बहुत पढे-लिखे बिना ही भारतवर्ष में नाम कमा गये हैं । लाखों की सम्पत्तिवाले बडे-बडे स्थान साधारण पढे लिखे विरक्त साधुओं के पुरुषार्थ से बन गए हैं । अपने आप अपना पेट पालन तो सवेरे से शाम तक एक काक (कौवा) कुत्ता भी कर लेता है इसमें कौन सी बहादुरी का काम है । आज भारतवर्ष में साधारण पढे लिखे विरक्त साधुओं का झण्डा फहरा रहा है । साधारण पढे-लिखे साधुओं ने अनन्त मठ, मन्दिर स्थान अपनी सिद्धाई से बनवाये हैं जिनमें आए गए अभ्यागतों का यथाशक्ति सत्कार होता है । आज उनका ही नाम जागृत हो रहा है जगत् में अभ्यागत सेवा से अतः अतिथि सेवा सभी को ध्यान से करना चाहिए ॥३८॥

**उत्सवोनिखिलः कार्योभगवतश्चवार्षिकः ।**
**नव्यान्नं सुफलं नव्यं तन्नैवेद्यार्थमानयेत् ॥३९॥**
**यथासम्पत्तिसानन्दं कार्य्यातन्न्यूनतानहि ।**

भगवतः श्रीरामचन्द्रादेः वर्षे भवोवार्षिकः प्रतिसम्वत्सरभावीनिखिलः सकलः । उत्सवः श्रीरामनवमीश्रीकृष्णाष्टमी इत्यादिसंज्ञकः । सम्पत्तिमनतिक्रम्येतियथासम्पत्ति । निजद्रव्यानुकूलम् । यावन्त आयाः सन्ति तदनुसारम् । यद्यायदशसहस्रस्यास्तितर्हि शतद्वयेनशतेनपञ्चाशतावेत्यादिव्ययेनयथाक्रमम् । आनन्देन सह वर्तते यस्मिन् कर्मणि तत् सानन्दमितिक्रियाविशेषणमिदम् ।



क्रियाविशेषणानां कर्मत्वं क्लीवत्वञ्चैकवचनत्वञ्चेति नियमेन सानन्दमितिक्लीवंजातम् । कार्यः सम्यग् विधेयः च तस्मै भगवतेनैवेद्यं तन्नैवेद्यं तन्नैवेद्यायेदम् तन्नैवेद्यार्थम् । नव्यञ्चतदन्नञ्च नव्यान्नं तत् । नूतनान्नम् नव्यं नवीनम् शोभनञ्चतत् फलञ्चेतिसुफलम् जातावेकवचनं ज्ञेयम् । आनयेत् तदानयतं कुर्यात् । न्यूनस्य भावोन्यूनतातेषां वार्षिकोत्सवनव्यान्ननव्यसुफलानयनानां न्यूनता तन्न्यूनता 'तस्यभावस्त्वतलौ' इति तल् प्रत्ययः तलन्तं स्त्रियामिति स्त्रीत्वम् । न नहि कार्या विधेया भगवत्सेवापूजावार्षिकोत्सवागताभ्यागतसत्कारसद्धर्मरक्षाविधानार्थमेव सम्पत्तिर्वर्तते नान्यार्थमिति ॥३९॥

भगवान् के बारह मास में जो-जो उत्सव शास्त्र में कहे गए हैं उन-उन समस्त उत्सवों को करना चाहिए । नया अन्न जो है, नये-नये फल जो हैं उन सबको भगवान् के भोग के लिए लाना चाहिये भगवान् के वार्षिक उत्सवों को भगवान् की सम्पत्ति के अनुसार ही करना चाहिए । उसमें कमती नहीं करना चाहिए जैसी भगवान् की सम्पत्ति है उसके अनुसार ही भगवान् के वार्षिक सभी उत्सवों को करना चाहिए। थोडी आवक है तो छोटा उत्सव मनाना चाहिए । बडी आवक है तो बडा उत्सव मनाना चाहिए ॥३९॥

**अनर्पितं न भोक्तव्यं किञ्चिद्वस्तुक्वचित्प्रभोः ॥४०॥**
**अन्यथापतितोभूत्वाऽधोगतिं लभते ध्रुवम् ।**
**महान्तपदर्विगत्वा यः श्रीभगवतोधनम् ॥४१॥**
**स्वस्मै कुटुम्बिने राति दुरव्ययं करोति च ।**
**स चाण्डालत्वमाप्नोति जन्मकोटिशतं किल ॥४२॥**

विरक्तश्रीवैष्णवनामधारिणेतिशेषः अहं विरक्तश्रीवैष्णवोऽस्मीतिसंकेतभाजेतियावत् । क्वचित् कस्याञ्चिदप्यवस्थामाम् प्रभोः कर्तुमकर्तुमन्यथाकर्तुसमर्थस्य श्रीरामचन्द्रस्य । न अर्पितमित्यनर्पितमनिवेदितम् किञ्चित् किमपि वस्तु भक्ष्यान्नादिपदार्थः । न भोक्तव्यम् न भुञ्जीत । ननु यदाकदाचिद्विदेशगमनं तीर्थयात्राऽऽदिप्रसङ्गे च तदाभगवत् प्रतिमाया अभावात् तत्र किं कर्तव्यं न भुञ्जीत तर्हिशरीरयात्राकथम्प्रचलेद्भवत्कथनानुसारेण तत्र भोजननिषेध इतिचेत्सत्यमुच्य

ते एतादृश्यामवस्थायाम् भक्ष्यवस्तुसम्पाद्यभगवन्मूर्तिंध्यात्वातारकमन्त्रेणभक्ष्य वस्तुनितुलसीदलंपातयित्वाजलंसमर्प्य तदनन्तरं भोक्तव्यम् तत् वस्तुभगवदर्पितं जातमेव किमेवं विरक्तश्रीवैष्णवपद्धतिं न जानाति यदेवं भवान् व्याचष्टे। श्रीव्यासदेवप्रतिपादितासु ह्यष्टविधासु प्रतिमासु मनोमयीप्रतिमाभवत्सन्निधौवर्तते नवा यत्र यत्र भगवत्प्रतिमा नास्ति तत्र तत्र सर्वत्र तुलसीदलं पातयित्वाभोजने नकाऽपि क्षतिः यत्र भगवत्प्रतिमा वर्तते तस्यैनिवेद्य भोक्तव्यमितितद्भावः । तदभावे किं भवति तदाह अन्यथा भगवदनर्पितपदार्थभोजने पतितोभूत्वाऽधोगतिं जघन्ययोनिंलभते प्राप्नोतिध्रुवं निश्चयंयथास्यात् तथा । अनेन यत्किमपि भोक्तव्यं वस्तु तद्वस्तु भगवते समर्प्यैवभुञ्जीतेति सूचितम् । यो विरक्तश्रीवैष्णवोमहान्तस्यपद विर्महान्तपदविस्ताम् । महान्तपदं रूढिरस्ति । इतः प्रथमं महान्तपदं समायातं तत्र महान् अन्तोसनातनश्रीवैष्णवधर्मरक्षारूपोविरक्तश्रीवैष्णवप्रवर्तितसिद्धान्तप्रतिपालनस्वरूपश्च यस्य समहान्त इतिप्रतिपादितं तत्रायमभिप्रायो महान्तपदं रूढिरेवास्तु । महान्तोबहुभारेस्यादितिशब्दार्णवः । महान्तोबहुभारः सनातनश्रीवैष्णव धर्मरक्षारूपो विरक्तश्रीवैष्णवसिद्धान्तप्रतिपालनस्वरूपोऽस्त्यस्यासौमहान्तस्तादृशवहुभारवान् । अर्श आदित्वादजन्तोऽयं शब्दः' इति नकाचित्क्षतिर्भवितुमर्हति महान्तपदविंगत्वाप्राप्य । श्रयतीतिश्रीः श्रियाविशिष्टः श्रीविशिष्ट स चासौभगवाँश्चेतिश्रीभगवाँस्तस्य श्रीभगवतोरामचन्द्रादेर्मठाश्रमादिस्थम् धनं द्रव्यं धनपद-मन्यसर्वपदार्थानां भगवन्मन्दिरमठाश्रमस्थानामुपलक्षणमस्तीत्याचार्याशयः । स्वस्मैस्वकीयायजन्मभूमिस्थगृहस्थकुटुम्बिनेनिजगृहस्थसम्बन्धिनेरातिददाति च पुनः दुष्टश्चासौव्ययश्चदुरययः । दुरुपयोगस्तम् । श्रीभगवतोधनस्येतिशेषः । श्रीभगवत्सेवापूजाविरक्तश्रीवैष्णवसत्काराभ्यागतस्वागतमकृत्वा केवलनिजानन्दादिविधानमेवदुरुपयोगः । करोति विदधाति सव्यक्तिविशेषः । कोटेःशतम् कोटिशतम् तदस्तियस्मिंस्तत् । अर्श आद्यजन्तम् । कोटिशतवत् जन्म अत्यन्तसंयोगेद्वितीया । चाण्डालस्यभावश्चाण्डालत्वं तदाप्नोति लभते किलेतिनिश्चये ॥४०।४१।४२॥

किसी हालत में भी किसी वस्तु को बिना भगवान् के भोग लगाये हुए नहीं पाना चाहिये शास्त्रों में यही अनन्यता कहा गया है।



जो भगवान् को भोग लगाये बिना ही कुछ भी वस्तु पा लेता है वह निश्चय करके अधोगति को पाता है जहाँ अनेक दुःख भोगने पडते हैं। भगवान् तो प्रेम के भूखे हैं उनके सामने पवित्र अमनिया योग्य वस्तु को रखके श्रीतुलसीदल छोड के प्रभु को अर्पण करके ही श्रीवैष्णवों को भोजन पाना चाहिए। आज तो यह प्रथा धीमे-धीमे उठ रही है। महान्तजी का भोजन अलग ही बनता है। प्रधान-प्रधान व्यक्ति अलग ही भोजन पाते हैं अथवा महान्तजी अलग ही भोजन पाते हैं यही अधः पतन का कारण है।

जो महान्त पद को पाकर के भगवान् के धन को भगवान् की सेवा में नहीं लगाता है तथा आए हुये अभ्यागतों को यथाशक्ति भोजनादि से सत्कार नहीं करता है। किन्तु भगवान् के धन को अपने गृहस्थ आश्रम के कुटुम्बी परिवार को देता है अथवा किसी धार्मिक कार्य से रहित अपने मौज-सौख में भगवान् के धन को खर्चता है वह मन्दबुद्धिवाला सैकडों जन्मों तक चाण्डाल योनि में जन्म पाके अनेक कष्टों को सहन करता है। अपने पूर्वज कोई विरक्त साधु अपने आंप अनेक कष्ट सहन करके भगवान् के नाम से धन-सम्पत्ति को इकठ्ठा किया हो वे उसके नाम को मिटा के अपने मनमाना उस धन-सम्पत्ति का प्रयोग करना तो हानिकारक ही है। हाँ उस विरक्त साधु का नाम जागृत करते हुए उसकी कमाई सम्पत्ति को भगवान् की सेवा में तथा आए गए अभ्यागतों की सेवा में लगाते हुये प्रवल औचित्य को ध्यान में रखकर अपने-अपने विषय श्रीवैष्णव साधुओं के विषय में भी लगाता है तो विशेष हानि नहीं ॥४०-४२॥

**धर्मार्थमिलितं द्रव्यं योऽधर्मेव्ययते शठः ।**
**वैष्णवार्थञ्चसम्प्राप्तं वस्तुतेभ्योनरातिचेत् ॥४३॥**
**स गर्दभत्वमायाति सहस्त्रं जन्मनिश्चयम् ।**
**वैष्णवार्थं किलस्वल्पं तथा भगवतेऽपि च ॥४४॥**
**वस्तु ददातिनैजार्थम्महन्महच्चमन्दधीः ।**
**गृहीत्वा रमतेनित्यं शूकरत्वं स गच्छति ॥४५॥**

शठोहृदयकुटिलो यो मनुष्यः । धरतिप्राणिवर्गं यः सधर्मः । अथवा प्राणिवर्गैर्ध्रियते यः सधर्मोवेदप्रतिपादितः । धर्माय इदं धर्मार्थं धर्मायमिलितं द्रव्य

मधर्मेव्ययं करोति च पुनर्वैष्णवेभ्य इदं वैष्णवार्थं प्राप्तम् वस्तु तेभ्योवैष्णवेभ्यो
नराति नददातिचेद्यदि समनुष्योनिश्चयम् यथा स्यात् तथा क्रिया विशेषणम् ।
अन्यथा घञजपः पुंसीतिपुंस्त्वप्रसङ्गः स्यात् । सहस्रं जन्म अत्यन्तसंयोगेद्वितीती
या । गर्दभस्य भावोगर्दभत्वन्तत् आयाति प्राप्नोति । ईदृशानामपिधर्मशास्त्रेषु की
दृशीगतिर्विहिता वर्तते के विदांसोनविदन्ति । अतोनाचार्य्यवरा दूष्याः स्युः ।

यः मन्दाधीर्यस्यासौ मन्दधीः कुमतिर्मनुष्यः सनातनधर्मश्रीवैष्णवधर्म
रक्षणार्थंविरक्तश्रीवैष्णवमठाश्रमादिस्थापितः । वैष्णवार्थंवैष्णवेभ्यः स्वल्पं-
किञ्चित् अतितुच्छमिति यावत् वस्तु ददातिवितरति च पुनः समुच्चयार्थम् । भग
वतेऽपि श्रीरामचन्द्रायाऽपि स्वल्पगतितुच्छं किञ्चिद्वस्तुददातिसमर्पयति । निज
एव नैजः स्वार्थेऽण् प्रत्ययः । नैजाय स्वस्मै इदम् नैजार्थमात्मार्थम् । महामहत्
अतिमूल्यं बहुसुन्दरमधिकं वस्तुगृहीत्वा नित्यं सर्वदारमते विहरति क्रीडते आनन्द
ति भुंक्ते भगवन्तं भागवतञ्चानपेक्ष्य स मन्दधीः शूकरत्वं गच्छति प्राप्नोति । ई
दृशानामपि मानवानां कीदृशीगतिर्विहितावर्तते शास्त्रेषु नात आचार्यवरा दूष्याः
स्युः । यथार्थं कथनमेवमहापुरुषाणां शोभनं भवति । दरीदृश्यतेहि सम्प्रतीदृशी
व्यवस्थाकिमत्रगोप्यं विदुषामस्तीति ॥४३-४५॥

धर्म के लिये धर्मशाला पाठशाला स्कूल अथवा अपङ्ग, अन्धे-लूले आदि के लिए अथवा पुराने मन्दिर, मठ आदि के सुधार, जीर्णोद्धार के लिये मिले हुए द्रव्य का अधर्म में पूर्वोक्त से विपरीत कार्य में अपने मौज सौख में उस द्रव्य का खर्च करनेवाला मूर्ख पामर मनुष्य और विरक्त श्रीवैष्णव साधुओं के लिये मिली हुई वस्तु को उन विरक्त श्रीवैष्णव साधुओं को नहीं देता है तो हजारों जन्म तक गदहा की योनियों में जन्म पाकर अनेक कष्टों को सहता है । और विरक्त श्रीवैष्णव साधुओं के नाम से तथा भगवान् के नाम से मिले हुये अच्छे-अच्छे पदार्थों में से विरक्त श्रीवैष्णव साधुओं को और भगवान् को बिगडी बिगडाई थोडी थोडी वस्तुओं को देता है और अपने आप बहुत कीमती अच्छी-अच्छी वस्तुओं को लेकर के हमेशा ही मौज-सौख करता है तो वह मूर्ख अनन्त जन्म तक शूकर योनि में जन्म पाकर के अनेक कष्टों को सहन करता है। इसलिये धार्मिक सम्पत्ति को धर्म कार्य में ही लगाना चाहिये ॥४३-४५॥



रामभक्तेरसं सर्वकल्याणदं सभ्यसामाजसन्मानदं सुन्दरम् ।
सम्पिवेद्वैष्णवोऽसभ्यतासूचकं धूमपानं विदध्यान्नदुःखावहम् ॥४६॥

वेवेष्टिसर्वत्रव्याप्नोतीतिविष्णुः सर्वव्यापकः श्रीरामचन्द्रः सभक्तिर्भजनी
योऽस्ति यस्यासौवैष्णवः श्रीरामभक्तिमान् प्राणीतिशेषः । व्याप्त्यर्थकविषधातो
रौणादिकोनुक् प्रत्ययः । ननु ककारस्येवोकारस्यापीत्संज्ञा कथं न भवतीति
मैवम् । श्रीबोधायनलब्धश्रीवैष्णवदीक्षपाणिनिमुनिप्रतिज्ञाविषयीभूतवर्णानामे
वेत्संज्ञात्वस्वीकारात् । कथमन्यथा प्रथमैकवचनस्य सोरुकारस्येत्संज्ञाभवतीति
न सप्तमीवहुवचनसुपउकारस्येत्संज्ञास्वीक्रियते शाब्दिकैरिति कोऽपराधोविहितः
सोरुकारेणातो न विष्णुशब्दसिद्धौकाऽपिवाधाऽस्मद्दृष्टिगोचरायते । नन्वत्र
विष्णुपदेनश्रीरामएवकिमर्थं स्वीक्रियते न नारायणकृष्णादयः स्वीक्रियन्तेऽत्रोच्यते
विष्णुपदश्रीरामपदयोर्विशेषणविशेष्यभावोभवितुमर्हति न तदतिरिक्तयोः सा-
मग्रभावात् । तथा हि स विष्णुरामयोरेव भवितुमर्हति । वेवेष्टि सर्वत्रव्याप्नो
तीतिविष्णुः । चराचरेषु रमते विहरति यः स राम इत्युभयोर्व्युत्पत्तिः साम्यं गच्छ
ति नान्ययोः । विष्णुपदं श्रीरामस्यविशेषणमस्तीति प्रथममेव सम्यग् विवेचि-
तम् । नारायणकृष्णादयोऽपि श्रीरामस्यविशेषणतामधिगन्तुमर्हन्तीतिसाधयिष्य
तेऽत्रैवानुपदमेवेति योविशेषणानुरागी स विशेष्यस्याप्यनुरागीभवत्येव विशेषण
विशेष्ययोरभेदात् । नीलघटयोरिवेति । सर्वाणि च तानि कल्याणानि सर्वकल्या
णानि तानि ददाति सर्वकल्याणदस्तम् । इह्यातोऽनुपसर्गेकः इति कः प्रत्ययः ।
ननु यदिसर्वशब्दः सकलवाचकस्तर्हि एकचनान्तेनैव विशेषणसमासेन निर्वाहे
बहुवचनान्तानुधावनं गगनकुसुमायमानं मैवम् । उद्भूतावयवविवक्षायां तथा
निर्वाहेऽपि तिरोहितावयवविवक्षायां निर्वाहाभावात् । समाज एव सामाजः स्वार्थे
ऽण् प्रत्ययः । सभायां साधवः सभ्याः सदाचारविशिष्टकुलीनाः 'सभाया यः'
इति यः प्रत्ययः । तेषां सामाजः सभ्यसामाजस्तस्मिन् तत्पानकर्त्रेवैष्णवायेति
शेषः । सन्मानं ददातितम् । सुन्दरं सर्वश्रेष्ठम् । रामस्यभक्तिः रामभक्तिस्तस्यार
समानन्दम् । सम्पिवेत् सेवेत । ननुकीदृशीरामभक्तिरित्याह श्रेयः सृतिम् । पुरेह
भूमन् । ध्रुवप्रह्लादद्रौपदीगजेन्द्राद्याचारितानन्यस्वरूपानवधाऽन्यतमेत्यादि । ननु
रसशब्दः शृङ्गारादौरूढस्तर्हिकथमिहरसपदेनपरमानन्दोगृह्यतेऽत्रोच्यते सम्यगनु

भुतिरेवप्रमाणन्तथाहि छान्दोग्योपनिषदि 'रसो वै स रसंह्येवायं लब्ध्वाऽऽनन्दीभवतीति-एतद्व्याख्यानं तत्र वर्तते विस्तरतया जगद्गुरुश्रीरामानन्दाचार्यपादप्रणीतानन्दभाष्येऽत्रापि संक्षेपमुच्यते यतो हि रसपदेन परब्रह्मश्रीरामभक्तिपरमानन्द एव सिध्येत् आलङ्कारिकप्रतिपादितलौकिकश्रृङ्गारादिरसग्रहणं न सिध्येदिहामुष्मिकपरमानन्दविचारणायाम् । वै निश्चयेन सपरब्रह्मपरमात्मा श्रीरामचन्द्रोरसः स्वात्माभिन्नपरमानन्दस्वरूपः 'सच्चिदानन्दं ब्रह्म' इतिश्रुतेः । हिर्हेतौयतोऽयमनन्यश्रीरामभक्तिसेवको रसम् परमब्रह्मश्रीरामानन्यभक्तिलभ्यपरमात्मसम्बन्धिपरमानन्दम् लब्ध्वाप्राप्य-प्रशस्त आनन्दः परब्रह्मश्रीरामानन्यभक्तिलब्धिपरमसुखमस्ति यस्य स आनन्दी भवतीति संक्षिप्तार्थः । किंभोज्ञातोभवता प्रकरणोपात्तः इहरसपदार्थः । ननु सर्वकल्याणमध्येपरमश्रेयोऽप्यायाति किंतद्दानेऽपि श्रीरामः समर्थोऽस्तीति यतः सर्वकल्याणपदोपादानं परं स्यादितिचेत्मैवम् । बाढं सर्वकल्याणदाने ससमर्थः । श्रीरामः परब्रह्मास्तीत्यतः सर्वदाने समर्थोऽस्तीति प्रागेवप्रदर्शितम् । नारायणशब्दः श्रीरामस्यविशेषणमस्तीति पञ्चमवेदे श्रीमद्वाल्मीकीयश्रीद्रामायणेसाधितं तथाहि युद्धकाण्डेसर्गे ११९ कार्य्यब्रह्मवाक्यम्-

अव्रवीच्छृणु मे वाक्यं सत्यं सत्यपराक्रम ।
भवान्नारायणोदेवः श्रीमाँश्चक्रायुधः प्रभुः ॥१२॥

किमनेन प्रसङ्गेन भवतो न प्रतिभाति नारायणश्रीरामयोर्विशेषणविशेष्यभावस्तर्हिकस्माच्चिद्विदुषः पठ्यतां तत्रत्यं प्रकरणम् । मनुसम्मतेनापि नारायणः श्रीरामस्य विशेषणम् । तथाहि मनुस्मृतिः । अ. १ श्लो. १।

आपोनारा इति प्रोक्ता आपो वै नरसूनवः ।
ता यदस्यायनं पूर्वं तेन नारायणः स्मृतः ॥

तद्व्याख्यानम् आपोजलानिनाराशब्देन कथ्यन्ते किन्तु तासु नाराशब्दस्याप्रसिद्धेरतस्तदर्थं उच्यते वै निश्चयेन आपोजलानि नरस्य नराख्यस्य परमात्मनः सकलश्रुतिस्मृतिपुराणसद्धर्मशास्त्रमार्गं प्रतिपालयितुं नररूपेणस्वेच्छयाकर्मानधीनतया गोरूपधरणीसकलसुरसुरेशसहितकार्य्यब्रह्मप्रार्थनयानिखिलकलाविशिष्टस्याजस्यजरामरणरहितस्य सत्यसाकेतधामस्थस्य षड्भावविकाररहितस्य देशकृतकालकृतवस्तुकृतपरिच्छेदशून्यस्य सर्वं कर्तुमकर्तुमन्यमाकर्तुं समर्थस्य



नित्यशरीरेन्द्रियविभूषितस्य श्रीदशरथगृहेऽवतीर्णस्य श्रीरामस्य सूनवोनरसूनवः । नहीहनरपदेनकश्चित्कर्माधीनः षड्भावविकारवान् देशादिकृतपरिच्छेदविशिष्टोनश्वरशरीरवान् साधारणोमनुजोग्रहीतुं शक्यते तस्मादबादिजनेरसम्भवात् तत्राप्पदमुपलक्षणं जातमात्रपदार्थानाम् । तद्ग्राहकत्वे सति तदितरग्राहकत्वमुपलक्षणम् । अतो नरपदेनमर्यादापुरुषोत्तमो नरतनुधारी श्रीराम एव ग्रहीतुं शक्यते । नरस्य नराख्यस्य परमात्मनः श्रीरामस्य नरतनुधारकस्य मर्यादापुरुषोत्तमस्य स्वेच्छया समवतीर्णस्यापत्यानिस्त्रियः इति नारा आपः अप्पदमुपलक्षणं जातमात्रपदार्थानाम् यावन्तः पदार्थाः सन्ति तावन्तः सर्वे एव ततएवजाताः सन्ति यतो वा इमानि भूतानि जायन्ते इतिश्रुतेः 'राम एव परं ब्रह्म रामादन्यन्न किञ्चन' 'राम एव परंब्रह्म राम एव परं तपः । राम एव परं तत्त्वं श्रीरामो ब्रह्मतारकम्' इति च श्रुतिवचनेनावगम्यते प्रथमं प्रतिपादितेयं श्रुतिः । यत् यस्मात् कारणात् । ता आपः अस्य परमात्मनो ब्रह्मरूपेणावस्थितस्य श्रीरामचन्द्रस्य पूर्वं प्रथमम् अयनं महाप्रलयान्तेस्थितिस्थानम् वर्तते इतिशेषः, तेन हेतुना, ईयतेस्थीयते महाप्रलयान्तेनिखिलैर्जीवपदार्थैर्यस्मिन् श्रीरामचन्द्रे यतो वा इतिश्रुतिबोधितपरमात्मनि सोऽयनः श्रीरामचन्द्रः । नात्रश्रीरामादन्योग्रहीतुं शक्यते 'रामएव परं ब्रह्म रामादन्यन्न किञ्चनेत्यादि श्रुतिविरोधात् । महाप्रलयान्ते नाराणां तदुपलक्षणकोत्पन्नमात्रपदार्थानामयनः । नारायणः श्रीरामचन्द्रः । अतोऽपि प्रतीयते नारायणः श्रीरामस्य विशेषणम् । स्मृतः सकलमहर्षिविद्वत्सन्मतोऽस्तीतिशेषः । नारा इत्यत्रापत्यार्थे 'तस्येदमित्यनेनाण् प्रत्ययः । अथवा नरस्य इमा नाराः इति सम्बन्धार्थेऽण् प्रत्ययः । शेषशेषिभावपक्षस्वीकारात् । अणन्तनारा इहङीप् प्राप्तस्तथापि छान्दसलक्षणैरपि स्मृतिषु व्यवहारात् सर्वे विधयश्छन्दसि विकल्यन्ते इतिपाक्षिकङीवभावे टापिसतितत् सिद्धिः । कृष्णोऽपि श्रीरामस्य विशेषणं वर्तते भक्तानां पापानिकर्षतीति कृष्ण इति व्युत्पत्तेः । पञ्चमवेदेश्रीमद्वाल्मीकीयश्रीमद्रामायणे कृष्णश्रीरामयोर्विशेषणविशेष्यभावोदरीदृश्यते तथाहि युद्धकाण्डे सर्गे ११९ श्लो. १५ कार्यब्रह्मवाक्यम्-

शार्ङ्गधन्वाहृषीकेशः पुरुषः पुरुषोत्तमः ।
अजितः खड्गधृग् विष्णुः कृष्णश्चैवबृहद्बलः ॥

इत्यनेन प्रकरणेन कृष्णादीनां विशेषणत्वं प्रतीयते । वासुदेवशब्दोऽपि श्रीरामस्यैवविशेषणम् । महाप्रलयान्ते सर्वजातपदार्थं स्वस्मिन् वासयतीतिवासुः वासेरौणादिक उण् प्रत्ययः सर्वं जातपदार्थं स्वेन तेजसा स्वयाशक्त्या देवयति प्रकाशतिमोदयति स्थापयतिपालयति यः स देवः श्रीरामस्योभयत्रग्रहणं भवितु मर्हति नान्यस्य 'राम एव परंब्रह्मेतिश्रुतिविरोधात्। वासुश्चासौदेवश्च वासुदेवः श्री रामचन्द्रः । न सभ्य इत्यसभ्यस्तस्य भावोऽसभ्यता तां सूचयतीति असभ्यता सूचकन्तत् । वैष्णवशुभदीक्षातोद्विजत्वं जायते नृणामितिहारितवचनानुसारेण वैष्णवदीक्षाग्रहीतृणां द्विजत्वं प्रतीयते द्विजत्ववतां द्विजानां धूमपानं धर्मशास्त्रे निषिद्धं वर्तते यदिद्विजोधूमपानं करोतितर्हिलोकेद्विजानां सभायां धूमपानकर्तृणा मसभ्यताप्रतीतिर्भवत्येव द्विजधर्मप्रतिकूलशूद्रधर्मानुकूलमेवतत् कथन्नासभ्यता प्रतीयते यदि कस्य चिन्महतः सन्निधौद्विजानां किं धूमपानं नासभ्यतासूचकं भव ति तर्हि कथं धर्मशास्त्रेद्विजानां कृते धूमपाननिषेधो वर्तते मया धूमपानं भवदभि मतं न खण्ड्यते किन्तु भवदभिमतधर्मशास्त्रैरेवतत् खण्ड्यते तदपि खण्डनं द्वि जानां कृते न शूद्राणां कृते नहि शूद्राणां कृते धर्मशास्त्रेषु निषेधो दरीदृश्यते किन्तु द्विजानां कृते एव यदि द्विजत्वं हारीतसम्मतं मन्यन्ते भवन्तस्तर्हितत्त्यजन्तु केवलं नासभ्यतासूचकमेव किन्तु दुःखप्रदमपितत् । दुःखम् रक्तमज्जावीर्यशो षणपूर्वकं कासकफवर्धनरूपम् आवहतिजनयतीतिदुःखावहम् तत् । धूमस्य पानम् धूमपानं तत् । न विदध्यात् कुर्यात् । धूमपानकर्तृणाम्मुखेहस्तद्वयेपूति गन्धोभवति सभ्यानां महतां विद्वद्धूरीणानां सदाचार्य्यवर्य्याणाञ्च तेषां समीपो पवेशनेकश्चिल्लज्जातु भवत्येवातोऽप्यसभ्यतासूचनमेव भवतीति तस्माद् द्विजा नां तत्पानं वर्जनीयमिति । भगवत्सेवापूजाविधानसमयेसपूतिगन्धोभवति भग वत्संनिधौसपूतिगन्धोशोभास्पदं भवति नह्यतस्तत् त्यागोवरमिति ॥४६॥

विरक्त श्रीवैष्णव को माननीय सज्जनों के समाज में सुन्दर सम्यक् आदर को देनेवाले इस लोक के तथा परलोक के समस्त सुखों को देनेवाले श्रीरामजी की सच्ची भक्ति के आनन्द की सायुज्यमुक्ति को देनेवाले को पाना चाहिए सद्भक्ति के आनन्द को अनुभव करना चाहिये जिससे जन्म-मरण मिट जाता है किन्तु असभ्य ता का सूचक अनेक खांसी आदि रोगों का जनक दुःखों को देनेवाले धूमपान को नहीं करनी चाहिये । तम्बाकू सम्बन्धी धूमपान नहीं करना चाहिये इससे अनेक खांसी



आदि रोग होते हैं । इनसे दमा आदि की बीमारी होती है उससे बहुत कष्ट होता है ॥४६॥

**भव्यां सम्पत्तिमीशस्य धर्मार्थमिलितां हरेः ।**
**तत्सेवायान्तथा च श्रीवैष्णवसत्कृतौ व्ययेत् ॥४७॥**

ईशस्य प्रभोः भक्तानां पापानि हरतिनाशयतीति हरिस्तस्य हरेः श्रीराम चन्द्रस्य । ननु हरिपदेनेह श्रीरामचन्द्रस्यैव कथं ग्रहणं भवति नहि कृष्णनारायण विष्णुप्रभृतीनामिति चेदुच्यते श्रीकृष्णप्रभृतीनां श्रीरामस्यैव विशेषणत्वात् । प्रमाणञ्चात्र पञ्चमोवेदः श्रीमद्वाल्मीकीयश्रीमद्रामायणमेव तथाहि युद्धकाण्डे ११९ श्लोकः २९ कार्य्यब्रह्मवाक्यम्-

सीतालक्ष्मीर्भवान् विष्णुर्देवः कृष्णः प्रजापतिः ।
वधार्थं रावणस्येह प्रविष्टोमानुषींतनुम् ॥

इत्यनेन प्रकरणेन सर्वेश्वरश्रीरामस्यैव विशेषणानि प्रतीयन्ते विशेष्यं विनाविशेषणस्थित्यभावो भवतीतितत्वविदोबुधाजानन्ति । एतेषाम् श्रीरामो वि शेषणमस्तीति किमत्र ज्ञापकं भवतां सन्निधौ सर्वेषु वेदेषु श्रीराम इति शब्दोव रीवर्त्तिनात्र केषाञ्चिद्विवादोदर्शितश्चप्राक् सर्वेषु वेदेषु राम इति शब्दः । 'एते चां शकलाः प्रोक्ताः कृष्णस्तु भगवान् स्वयमिति कृष्णस्यैव भगवत्त्वं प्रतीयतेऽन्ये षामवताराणामंशत्वमिति नभ्रमितव्यम् । श्रीकृष्णगाथाविशिष्टे तत्रैवभागवते द शमस्कन्धे अ. १ श्लो. २ 'तत्रांशेनावतीर्णस्य विष्णोर्वीर्याणिशंसनः' तत्रैव 'दि ष्ट्याऽम्ब ते कुक्षिगतः परः पुमानंशेनसाक्षाद्भगवान्भवाय' इत्यादिप्रकरणेन श्री कृष्णस्यांशावतारत्वं श्रीव्यासदेवेन प्रदर्शितम् । श्रीरामगाथाविशिष्टे श्रीमद्वाल्मी कीयश्रीमद्रामायणे सर्वत्रैव परब्रह्मपदेन विशेषितोवर्तते श्रीरामचन्द्रो न तत्रांशप दचर्चाऽपिदरीदृश्यते किं बहुना भागवते मुग्धकण्ठेन श्रीव्यासदेवेन 'अस्मत्प्रसा दसुमुखः कलया कलेश इक्ष्वाकुवंश अवतीर्य गुरोर्निदेशे । तिष्ठन् वनं सद यितानुज आविवेश यस्मिन् विरुध्यदशकन्धर आर्तिमार्च्छत्' ( ९।७।२३ ) इत्यत्र सर्वेशश्रीरामस्य सकलकलेशत्वं प्रतिपादितम् । तथैवान्यत्रापि श्रीरामस्य सर्ववि शिष्टं महत्वं वर्णितं पञ्चमनवमदशमैकादशस्कन्धादिषु तदत्र प्रसङ्गे जगद्गुरु श्रीगङ्गाधराचार्यानुगृहीता श्रीशुकार्यमतदीपिकानुसन्धेया विशेषार्थिभिरिति दिक् । अतो ह्यत्र हरिपदेन विशेष्यतया श्रीरामस्यग्रहणमन्येषां विशेषणरूपसमा नार्थतया । धर्माय इदं धर्मार्थं धर्मार्थं मिलिता धर्मार्थमिलितताम् । भग वत्सेवनम् श्रीवैष्णवसत्कारोऽभ्यागतातिथिसत्कारश्चधर्म एवास्ति । भव्यां पवित्रां

**सम्पत्तिमैश्वर्यम् । तस्य हरेः सेवातत्सेवा तस्याम् । तथा श्रीवैष्णवानां सत्कृतिः सत्कारः श्रीवैष्णवसत्कृतिस्तस्याम् । चोऽनुक्तसमुच्चयार्थः । अभ्यागतातिथी-नाञ्चसत्कृतौ व्ययेत् । व्ययं कुर्यात् । अनेन यदर्थं यद्वस्तु मिलितं वर्तते तस्मिन्नेव तद्व्ययेन्नान्यत्रेतिव्यज्यते ॥४७॥**

प्रभु श्रीरामजी की धर्मकार्य के लिये मिली हुई सम्पत्ति को भगवान् की सेवा में, भगवत् सम्बन्धी सत्कार्यों में और श्रीवैष्णवों के सत्कार में ही खर्च करना चाहिये जिससे इस लोक में तथा परलोक में सत्कीर्ति होवे कि यह प्रभुभक्त सच्चा है। प्रभु की सम्पत्ति को अपने मौज-सौख में नहीं लगाता है किन्तु परमार्थ में ही लगाता है। अपने तो शरीर निर्वाह के लिए प्रभु समर्पित भोजन वस्त्र साधारण ही लेता है ॥४७॥

**त्रिपुण्ड्रं भस्मनोदध्याच्छ्रीवैष्णवः कदाऽपि वै ।**
**पञ्चकेशजटा श्रीमद्भद्ररूपातिशोभितः ॥४८॥**

**भद्रञ्च तद्रूपञ्च भद्ररूपम् भद्ररूपमिति विरक्तश्रीवैष्णवसमाजैकसंज्ञा वर्तते । शिखां विहायशिरः केशश्मश्रुमुण्डनमिति यावत् प्रशस्ता श्री शोभा यस्यास्तितत् श्रीमत् । श्रीमच्चतद्भद्ररूपञ्च श्रीमद्भद्ररूपमित्यनेन भद्ररूपस्य प्राशस्त्यं द्योत्यते । पञ्चकेश इति विरक्तश्रीवैष्णवसमाजैकसंज्ञा वर्तते । पञ्चकेशश्चजटा च श्रीमद्भद्ररूपञ्चेतीतरेतरयोगे सर्वपदार्थप्रधानोद्वन्द्वस्तैरतिशोभितोलंकृतः श्रीवैष्णवः कदाऽपि कस्याञ्चिदप्यवस्थायाम् शैवादिचिह्नसूचकम् त्रिपुण्ड्रं भस्म नो नहि दध्यात् विभृयात् । वै निश्चयसूचकमव्ययम् । अनेन श्रीमदाचार्य्य प्रवरा इदं सूचयन्ति यत् येकेचिद्विरक्तश्रीवैष्णवाः सर्वाङ्गेभस्म तथा शिरसि जटाञ्च दधति ते दधतु नाम नानेन किञ्चितपापं शास्त्रमर्यादाविरुद्धं वा पश्यामः । किन्तु एताहशीं प्रथां श्रीसम्प्रदायाचार्य्या जगद्गुरुश्रीरामानन्दाचार्या नहि प्रचलितवन्तो नहि ते जटा भस्म च धृतवन्तो यदि केषाञ्चिदभिनिवेशस्तर्हि किमत्र ज्ञापकमस्ति ? नास्ति श्रीमदाचार्यश्रीरामानन्दाचार्यप्रणीतग्रन्थेषु तच्चर्चाऽपि प्रमाणमन्तराकृत्यैववयं किमपि कर्तुं शक्नुमोनहितद्विनास्वकल्पितं प्रमाणं स्वीकर्तुं वयमर्हामः । तस्मात् सर्वाङ्गभस्मजटाधारणं शोभनं वर्तते ये दधति ते तदनुसारवर्तिनो माननीयाः सन्तीतिनात्रास्माकं कोऽपि विद्वेषोऽस्माकमपि ते मान्या सन्ति किन्तु 'ऊर्ध्वपुण्ड्रं द्विजः कुर्यात्' इत्यादिशास्त्रमर्यादामालक्ष्य श्रीवैष्णवानां त्रिपुण्ड्रभस्मधारणे ह्येवास्माकं विद्वेषतम इतिभावः ॥४८॥**

विरक्त श्रीवैष्णव साधुओं को त्रिपुण्ड्र भस्म नहीं धारण करनी चाहिए। बांकी



समस्त शरीर में धारण करने की प्रथा वर्तमान में है जैसा कि त्यागी, तपस्वी श्री वैष्णवों में किन्तु केवल त्रिपुण्ड्र भस्म धारण विरक्त श्रीवैष्णवों को निषेध है। ऐसा भूल कभी भी नहीं करना चाहिए। श्रीवैष्णव समाज में तीन तरह की प्रथा है या तो पञ्चकेश रखना, दाढी-मूछ के बाल सहित शिर के नहीं कटवाना यह पञ्चकेश प्रथा है। दाढी या तो मूछ के सहित शिर समस्त वालों को बनवा देना, शिखा को छोडके यह भद्र रूप की प्रथा है। या तो जटा रखना यह भी प्रथा है। ये तीनों प्रथाएँ आज श्रीवैष्णव समाज में देखी जा रही है। तीनों ही श्रीवैष्णव विरक्तों के युक्त ही है ॥४८॥

**रामानन्दसुमानिते श्रुतिनुते श्रीसम्प्रदाये शुभे**
**काषायोऽस्ति पटः सितोऽपि विहितोभव्यः शिखासंयुतः ।**
**श्रीलश्रीतिलकेनभूषिततमो यज्ञोपवीतस्तुतः**
**संन्यासोऽस्ति वरस्त्रिदण्डसहितोमान्यश्चतुर्थाश्रमः ॥४९॥**

**रमन्ते योगिनो यस्मिन् स रामः क्रीडार्थकरम् धातोः 'हलश्चेति पाणिनीयसूत्रेणाधिकरणे घञ् प्रत्ययः । आनन्दनमानन्दः । आङ्पूर्वकसमृद्ध्यर्थकनन्द धातोर्भावे घञ् प्रत्ययः । रामस्यानन्दो यस्मात् स रामानन्दः । रामादानन्दोयस्य स रामानन्दो वा रामानन्द इति नाम तीर्थराजप्रयागोत्पन्नसुशीलेतिपत्निककान्यकुब्जवंशावतंसविद्वद्धौरेयश्रीपुण्यसदनशर्मकृतमस्ति । द्वादशेऽहनिपुत्रस्य पिता नामकुर्यादितिधर्मशास्त्रवचनात् । एतेन केषाञ्चित्कथनं यत्प्रथमं नाम रामानन्दस्य रामदत्त इत्यासीत्संन्यासानन्तरं रामानन्द इतिनामकृतं वर्तते इति प्रत्युक्तं भवति तेषां शास्त्रानभिज्ञत्वात् । तथैवान्यं कुचोद्यं जगद्गुरुश्रीराघवानन्दाचार्य शरणापन्नानन्तरमेव रामानन्देतिख्यापितमित्यपि निरस्तं वेदितव्यमेतल्लेखकानां शास्त्रानभिज्ञतमत्वात् । यदि रामानन्द इति नामजन्मसिद्धं न स्यात् तर्हि वहु शास्त्रादिषु लिखितं वर्तते रामानन्दोभविष्यतीतिवचनस्यकागतिः स्यात् । तथाहि श्रीवाल्मीकिसंहितास्थपञ्चमाध्याये-**

'यदा यदा हि धर्मोऽयं विष्णोः साकेतवासिनः ।
कृशतामेतिभोदेवि तदा स भगवान् हरिः ॥
रामानन्दयतिर्भूत्वा तीर्थराजे च पावने ।
अवतीर्य्य जगन्नाथोधर्मं स्थापयते पुनः ॥ इति ।'

**'रामानन्दः स्वयं रामः प्रादुर्भूतो महीतले' इति वैश्वानरसंहितायाम् । अगस्त्यसंहितायाञ्च तथैवेदं पद्यं वर्तते । तथा भविष्यपुराणे तृतीयपर्वणिचतुर्थ**

खण्डे एकविंशत्यध्याये 'रामानन्दप्रभावतः' इति वर्तते नहि कुत्रापि रामदत्ता दिनिर्देशो वर्ततेऽतः प्रमाणाभावात् प्रदर्शितशास्त्रज्ञमहर्षिवचनाच्च रामानन्द इति नाम जन्मसिद्धमस्ति। अहो कीदृशीशास्त्रानभिज्ञतावरिवर्ति तेषां परमपाम राणां देवानाम्प्रियाणां यत् तेषां न दृष्टिगोचरीभवति शास्त्रवचनं रामानन्द इति पदेन तस्यावतारसूचकम् यदि रामानन्द इति नाम जन्मसिद्धं नस्यादत्ता तन्नाम तोऽवतारसूचकशास्त्रवचनमनर्थकं स्यात् । ननु श्रीवैष्णवपञ्चसंस्कारमध्ये नाम संस्कारोऽप्यस्ति साम्प्रतमीदृशीप्रथादरीदृश्यते दासान्तं नामकुर्यादिति रामानन्द दास इति कथन्ननामकृतमस्ति मैवम् तथा सत्यपि नाम इतिभगवन्नाम सम्बन्धि नाम कुर्यादिति यत्स्वयमेवतन्नामसम्बन्धिनामवर्तते तत्परिवर्त्यते नहि। योजयेन्ना मदास्यान्तं भगवन्नामपूर्वकमिति पराशरसंहितावचनस्याप्येवमेवाभिप्रायः । दा-सान्तोऽपि पाठोदृश्यते क्वचित् किन्तु स दासान्तः पाठक्वचित्कः प्रतिभाति दास शरण प्रपन्न आनन्द इत्याद्यपि दर्शनात् । शर्मादिवदौपाधिकमात्रत्वाच्च कथं शर्मान्तं विहायसम्प्रति मिश्रशुक्लद्विवेदीत्यादिकान्तं नामलोकेदरीदृश्यतेऽतो मन्यामहे उपाधिनामग्रहणमिच्छाधीनं वर्ततेऽतोभगवन्नामपूर्वकं रामानन्दाचार्य इति नाम शोभनं नात्र विवादः ।

रामानन्देन सुमानितो रामानन्दसुमानितस्तस्मिन् तत्स्वीकृते श्रुतिषु वेदोत्त रभागोपनिषत्सु नुतः स्तुतः प्रशंसित इति यावत् । सप्तमीयोगविभागात् सुप्सु पेति वा समासः । तस्मिन् श्रुतिनुते । शुभे सभ्यादृतेऽतिविमल इति यावत् । श्रिया: सीतायाः सम्बन्धी श्रीसम्बन्धी श्रीसम्बन्धी चासौ सम्प्रदायश्च श्रीसम्प्र दायोमध्यमपदलोपी विशेषणसमासः । तस्मिन् नित्यसाकेतधामस्थपरब्रह्मसंज्ञक श्रीरामाप्तादिशक्तिश्रीसीताजिद्वारकभगवत्पार्षदनित्यमुक्तश्रीहनुमद्विरिञ्चिवशिष्ठा दिपुरःसरभूलोकप्रथिते इतियावत् 'श्रीरामं जनकात्मजामनिलजं वेधो वसि ष्ठावृषी योगीशञ्च पराशरं श्रुतिविदं व्यासं जिक्षातं शुकम् । श्रीमन्तं पुरुषोत्तमं गुणनिधिं गङ्गाधराद्यान् यतीन् श्रीमद्राघवदेशिकञ्चवरदं स्वाचार्यवर्यं श्रये' इत्या नन्दभाष्यकाराचार्यपादोक्तेः । भव्यः शिष्टस्वीकृतः कषायेणरक्तः काषायः पटो विहितोऽस्ति । सितोऽपि पटोविहितोऽस्ति । ननु सितः पटः सम्प्रतिप्राय सर्वैः श्री वैष्णवैः धार्यतेऽतः सप्रमाणिकः काषायः पटः सम्प्रत्याचार्यातिरिक्तकेनचिन्न धार्य्यतेऽतोऽप्रमाणिकः स श्रीसम्प्रदायेऽत्रोच्यते प्रायः सितः पटोधार्य्यते सम्प्रतीति वर्तमानाचारप्राप्तप्रामाणिकः । काषायपटस्तु शास्त्रसिद्धोऽस्तीति तथाहि पञ्चमवेदेश्रीवाल्मीकीयश्रीमद्रामायणेऽयोध्याकाण्डे स. १२ श्लो. ९९



'महार्हवस्त्रसम्बद्धोभूत्वाचिरसुखोचितः ।
काषायपरिधानस्तु कथं रामोनिवत्स्यति ।'

इति यदि काषायः पटो न स्यात् संन्यासिधारणे योग्यः तर्हि कथम्महर्षि णातद्विधानं कृतमतः प्रतीयते संन्यासिनां कृते काषायः पटोविहितो न धार्य्यते चेदस्माकमेव प्रमादो वर्तते । 'मोक्षाश्रमे स्मृतं वस्त्रं रक्तं गैरिकधातुना' इति दत्ता त्रयोऽपि संन्यासिनां कृते काषायमेव पटमुक्तवान् । कात्यायनोऽपि संन्यासिनां कृते त्रिदण्डकाषायादिकमुपदिशति 'त्रिदण्डजलपवित्रशिक्यपात्रकौपीनकाषाय वस्त्राणीत्यादिना तथा च 'काषायवासाः सततं ध्यानयोगपरायणः' श्रीवाल्मी किसंहितायां धौतकाषायवसनः' 'काषायवासा: सततं ध्यानयोगपरायणः' पद्म पुराणादिखण्डे 'काषायवासाः' श्रीबोधायनीये 'काषायकर्पटः कौपीनाच्छाद नार्थं वासो बिभृयात्' श्रीगालवे 'काषायमेव कार्पासं वासः' श्रीलिखिते 'लिङ्गं वर्णाश्रमसूचकचिह्नविशेषः शिखासूत्रतिलकतुलसीकण्ठमालिकात्रिदण्डकाषा यादिः' आनन्दभाष्ये 'काषायकं वस्त्रयुगं च धारयेत्' श्रीवैष्णवमताब्जभास्करे प्रभृतिपरमाप्ततमशास्त्रेषु काषायधारणविधानात् श्रीरामानन्दीयश्रीवैष्णवानां सदाचार्यतो गृहीतविधानतो विरक्तदीक्षाणां कृते काषायवस्त्राणामेव धार्यत्वं ज्ञायते 'सहदण्डत्रयेणान्त्या काषायाम्बरधारकाः' इति ब्रह्मर्षिश्रीवशिष्ठवचनात् त्रिदण्डधारिणामनिवार्यं काषायवस्त्रम् 'काषायाम्बरश्वेतादिहरिन्नीलांवि-नाम्बराः' इति तेषामेव कथनात् त्रिदण्डरहिताः श्रीरामानन्दीयाः विरक्तश्रीवैष्ण वाः हरिन्नीलं विना श्वेतवस्त्रमपि धारयितुं शक्नुवन्ति परन्तु हरित् वस्त्रं नीलवस्त्रं तु कदापि न धारणीयम् । 'मञ्चकं शुक्लवस्त्रं च स्त्रीकथा लौल्यमेव च । दिवा स्वापं च यानं च यतीनां पातकानिषट्' इति महर्षिश्रीवाल्मीकिवचनात् 'रात्र्य ध्वानं च यानं च स्त्रीकथा लौल्यमेव च । मञ्चकं शुक्लवस्त्रं च यतीनां पतना निषट्' इति श्रीमेधातिथिवचनात् 'न वा तदूर्ध्वं शुक्लाम्बरं बिभृयात्' इति महर्षिश्रीबोधायनवचनाच्च विरक्तश्रीरामानन्दीयश्रीवैष्णवैः पतनकारणभूत-शुक्लाम्बरं न धारणीयं परमार्थसाधनभूतसर्वशास्त्रसम्मतकाषायाम्बरमेव धा रणीयमितिशास्त्रसारं ज्ञातव्यम् । जगद्गुरुश्रीरामानन्दाचार्यस्वीकृते श्रीसम्प्रदाये संन्यासाश्रमस्वीकारान्नात्रवक्तव्यमस्ति किञ्चित् । शिखयासंयुतः शिखासहित इति यावत् । श्रियाविशिष्टं श्रीविशिष्टञ्चतत् तिलकं च श्रीतिलकम् । रक्तश्वेतादि श्रीविशिष्टमिति यावत् । प्रशस्ता श्रीः शोभा यस्यास्तीति श्रीलम् 'सिध्यादि भ्यश्चेति लच् प्रत्ययः प्रशस्तार्थे । श्रीलञ्चतत् श्रीतिलकञ्च श्रीलश्रीतिलकन्तेन ।

अयमेषामतिशयेनभूषितः शोभितो **भूषिततमः** । श्रीलश्रीतिलकविशिष्ट इत्यर्थः । 'अतिशायनेतमविष्ठनौ' इति **तमप् प्रत्ययः** । यज्ञोपवीतेन स्तुतः सुशोभितो यज्ञोपवीतसहित इति यावत् । **त्रयाणां** दण्डानांसमाहारः त्रिदण्डम् तेन सहितः । अथवा त्रयश्चतेदण्डाश्च तैः **सहितः** । **वरः** श्रेष्ठः सुष्ठूपनिषत् सिद्धत्वात् । संन्यासः चतुर्थाश्रमः मान्यः स्वीकार्य्योऽस्ति । एतेन श्रीवैष्णवसंन्यासः शिखाय ज्ञोपवीतत्रिदण्डकाषायवस्त्रश्रीविशिष्टद्वादशतिलकयुक्त एव भवतीति ध्वन्यते । श्रीतुलसीमालाधारणम् श्रीवैष्णवानामन्यत्र श्रीवैष्णवेशास्त्रेनित्यतयाविहितमस्तीति तद्धारणं न सूचितं स्वाभाविकलब्धत्वात् । यद्यप्यसधातुः क्षेपणार्थकोऽस्ति तथापि सन्निपूर्वकः सम्यक् त्यागार्थकस्तस्माद् भावे घञ् प्रत्ययः । अतएव संन्यासपदस्य यथार्थ ईदृशः **सांसारिकजन्यभोगतृणायमानमनस्कः** संन्यासः । चतुर्णाम्पूर्णश्चतुर्थः सचासावाश्रमश्चतुर्थाश्रमः । मानयितुं योग्यो मान्यः । चौरादिकमानिधातोः 'अचोयत्' इति यत् प्रत्ययः कर्मणिणिलोपः । छादेर्घे इति प्रमाणेन निमित्तापायेतैमित्तिकस्याप्यपाय इति न्यायोऽनित्योऽतो वृद्धेरनिवृत्तेः । ननु संन्यासे शिखासूत्रत्यागो विहितोऽस्ति कथं तद्विधानं क्रियतेऽत्र: ? । श्रीवैष्णवसंन्यासे सनातनशास्त्रमर्यादानुकूलं तद्रक्षणं विधीयते । तथाहि यज्ञोपवीतरक्षणमुशना आह 'ब्रह्मसूत्रपरित्यागाद् ब्रह्मचारीगृहीवनी । परिव्राड्वाऽपि पतति तस्मात् तन्नपरित्यजेत्' इति । शिखा रक्षणमाह लिखितः 'ऋतुसन्धिषु सर्वत्रचातुर्यास्यान्तरं विना । पौर्णमास्यां शिखा वर्जं मुण्डयेतशिरोयतिः' इति । ननु संन्यासे एकदण्डधारणं विहितं त्रिदण्डविधानं ह्यप्रमाणिकमितिचेन्नैवम् । श्रीवैष्णवसंन्यासेत्रिदण्डधारणमेवविहितं सप्रमाणन्तथाहि-महाभारते 'त्रिदण्डधारणं शस्तंतथैकान्तनिषेवणम् । लध्वाहारमनायासो यतीनां मुक्तिसाधनम्' इति । तथैव भारद्वाजः 'सव्येनादायपात्राणि त्रिदण्डं दक्षिणेन च' यतिरितिशेषः । आह च-त्रिदण्डग्रहणेनैव प्रेतत्वं नैवगच्छति । ऊर्ध्वपुण्ड्रतिलकश्रीतुलसीमालाधारणे प्रमाणं वक्ष्यतेऽतोनेह प्रयत्यते । ननु मूले केवलं संन्यास एवोपात्तोऽस्तीति कोहि संन्यासोऽभिप्रेतोऽस्ति मूलकर्तुरत्रोच्यते-संन्यासभेदश्चतुर्विधो वर्तते इति के नहि यतयोविदन्ति नाम । यद्यप्यन्योभेदोऽस्ति । तथापि मुख्यश्चतुर्विध एवभेदः । चतुर्धाभिक्षवस्तु कुटीचकबहूदकौ । हंसः परमहंसश्च योयः पश्चात् स उत्तमः, इह विवादश्चेत् । अत्रिराह 'शिखिनश्च श्रुताः केचित् केचिन्मुण्डास्तु भिक्षुकाः । चतुर्धाभिक्षवो विप्रा सर्वेचैव त्रिदण्डिनः ॥ तथैवाह पराशरः 'ततः परिव्राजकाश्चतुर्धाभवन्ति कुटीचकबहूदक-



हंसपरमहंसाश्चेति । अनेन विरक्तश्रीवैष्णवानां संन्यासाश्रम एव स्वीकृतो वर्तते ग्रन्थकारस्येति मूलेसंन्यासश्चतुर्थाश्रम इति प्रतिपादितम् । 'पञ्चमोवैष्णवाश्रम' इति मतं हेयं विरक्तश्रीवैष्णवैरप्रामाणिकत्वादवैदिकत्वाच्चेति । अतश्चतुर्विध संन्यासे परमहंस संन्यास एव ग्रन्थकर्तुरभिप्रेतोऽस्तीति सम्यक् प्रतिभाति पूर्वत्र याणां संन्यासभेदानां विरक्तश्रीवैष्णवायोग्यत्वात् । अतो विरक्तश्रीवैष्णवानां परमहंसाख्यः संन्यासश्चतुर्थाश्रमोस्तीति निश्चीयते सकलशास्त्रसारत्वादित्यलं पल्लवितेन । श्रीर्लक्ष्मीरितिपर्यायशब्दद्वयं कोशेनिर्णीतं वर्तते । 'सीतालक्ष्मीर्भवान् विष्णुरितिसर्वस्वीकृतपञ्चमोवेदः श्रीमद्वाल्मीकीयश्रीमद्रामायणम् । इत्यनेन प्रतीयते श्रीसीतासाक्षादादिशक्तिरस्ति लक्ष्मीपदं तस्याविशेषणमस्तीति यदि श्रीसीतापरमब्रह्मश्रीरामस्यादिः शक्तिस्तर्हि यत् केनचित् परमपामरेण देवातां प्रियेण बद्धजीवकोटौ श्रीसीतायागणनाविहिता तत् किं विद्वद्धौरेयैः परम विवेकिभिः श्रीरामानन्दीयश्रीवैष्णवैः स्वीकर्तुं शक्यते? नहि नहि कदापि नहि । यतो हि सर्वं प्राणिवर्गं सिनाति स्व स्व कर्मानुसारेण फलेन योजयति या सा सीता । बन्धनार्थकसिधातोर्वाहुलकाद् वर्तमानकाले कर्तरिक्तः प्रत्ययोदीर्घश्च अथवा अन्तर्भाविण्यर्थकनाशार्थकसीधातुः । महाप्रलयेस्यति नाशयति चराचरं जातमात्रं या सा सीता परब्रह्मश्रीरामादिशक्तिः । पूर्ववत् क्तः प्रत्यय इत्वं दीर्घश्च निपातनादिति । यद्यपि सुधातुरभिसवार्थकः पाणिनिधातुपाठेपठितस्तथापि धातूनामनेकार्थत्वं प्रसिद्धमस्ति सेधतेर्गतावितिप्रमाणात् । एवञ्च प्रकृते सुधातु उत्पादनार्थको गृह्यतेऽन्तर्यामिण्यर्थत्वात् । तथा च सुनोति सर्वं चराचरं पदार्थमात्रमुत्पादयति सर्गादौ या सा सीता । उक्तधातुत औणादिकडीतच् प्रत्ययः । टिलोपेतत्तष्टापिसीताशब्दसिद्धिः ।

ततश्च 'अर्वाची सुभगे ! भव सीते ! वन्दामदे त्वा । यथा नः सुभगाऽससि यथा नः सुफलाऽससि' ( ऋ. ४।५१।६ ) इत्यादिरूपेणवेदोपनिषत्सुदेवादिभिर्महर्षिभिश्च संस्तुता । प्रकृतश्रुतिव्याख्याने जगद्गुरुश्रीराघवानन्दाचार्याः प्राहुः 'सीता प्रकटितां सीतां देवाः प्रार्थयमाना आहुः-सुभगे ! सडैश्वर्यशालिनि ! तथोवाच सर्वेश्वरी भगवतीश्रीसीतैव श्रीहनुमत्पृष्टासती-

'सर्वेश्वरी यथा चाहं रामः सर्वेश्वरस्तथा ।
षड्गुणो भगवान् रामः षड्गुणाहं स्वभावतः ॥
सर्वस्याधारभूतौ च त्वावामेवहि मारुते: ।
स्वे महिम्नि स्थितावावामन्याधारो न चावयोः ॥
सच्चिदानन्दरूपश्च मादृशोराघवोऽपि हि ।

माद्दशोराघवश्चापि सर्वस्याधारतां गतः ॥१५॥
सर्वफलप्रदौ चावां नित्यौ च सर्वशेषिणौ ।
नित्यलीलाविभूत्योस्तच्चावां नाथौ श्रुतौ श्रुतौ ॥१६॥
दिव्यदेहगुणो रामो दिव्यदेहगुणा ह्यहम् ।
भक्त्या मुक्तिप्रदो रामस्तथाचाहं मतः बुधैः ॥१७॥
पूज्यौस्तुत्यौ तथाऽमोघकीर्तनीयौ समावथ ।
चिन्तनीयौ प्रणामार्हावावां दृश्यावभीष्टदौ ॥१८॥
आवां तौ हि यतः कश्चिन्नाधिको न च यत्समः ।
सर्वात्मानौ मतौ चावां सर्वेषां प्रेरकौ तथा ॥१९॥
सर्वेषामवताराणामावामेवावतारिणौ ।
भासकभास्करादीनामावामेव विभासकौ ॥२४॥
इति ( वशिष्ठसंहिता ) उक्तञ्च भगवता श्रीहनुमताऽपि तत्रैव-
'सर्वकर्मसमाराध्या सर्वकर्मफलप्रदा ।
सर्वेश्वरी च सर्वज्ञा श्रीसीता शरणं मम ॥११॥
नित्यमुक्तस्तुता स्तुत्या सेविताविमलादिभिः ।
अमोघपूजनस्तोत्रा श्रीसीता शरमं मम ॥१२॥
कल्पवल्ली हि दीनानां सर्वदारिद्र्यनाशिनी ।
भूमिजा शान्तिदा शान्ता श्रीसीता शरणं मम ॥१३॥
आपदां हारिणी चाथ कारिणी सर्वसम्पदाम् ।
भवाब्धितारिणी सेव्या श्रीसीता शरणं मम ॥१४॥ इति ।

सीते ! स्यत्यसुराणामन्तं करोतीति सा कर्तरि क्तः सीताप्रकटनादसुरान्त कारिणी सीतोत्पन्ने त्वा त्वां वन्दामहे स्तुमोऽर्वाचीमनुकूला लोकानामस्माकं देवा नां च भवैधि । यथा येमानुकूल्यप्रकारेण नोऽस्माकं सुभगा उत्तमैश्वर्यप्रदा सत्य ससि दिव्यसे तथा यथानः सुफला असुरनाशेन प्रयोजनवती चाससि । देवाना मस्माकमैश्वर्यदानेनाऽसुरनाशनेन च कृत्वा सुभगत्वेन सीतात्वेन सुफलत्वेन च दिव्येथा इतिभावः' ( वेदरहस्ये मार्तण्डभाष्यम् ३४ ) इति । तथैवानन्दभाष्य काराः श्रीवैष्णवमताब्जभास्करे प्राहुः-



ऐश्वर्यं यदपाङ्गसंश्रयमिदं भोग्यं दिगीदौर्जगच्
चित्रं चाखिलमद्भूतं शुभगुणा वात्सल्यसीमा च या ।
विद्युत्पुञ्जसमानकान्तिरमितक्षान्तिः सुपद्मेक्षणा
दत्तान्नोऽखिलसम्पदो जनकजा रामप्रिया साऽनिशम्' ( १।२ )

**अत उक्तकुचोद्यं सर्वथैवहेयं वेदादिसर्वशास्त्रविरुद्धत्वादितिदिक्विस्तरस्तु यथाशास्त्रं श्रीसूक्तप्रकाशादितोऽवधेयं विशेषार्थिभिः ॥४९॥**

जगद्गुरु श्रीरामानन्दाचार्यजी महाराज से स्वीकृत वेदादि विहित पवित्र श्री सम्प्रदाय में सुन्दर काषाय वस्त्र तथा सफेद वस्त्र विहित है । इस श्रीरामानन्दसम्प्रदाय श्रीसम्प्रदाय में शिखा यज्ञोपवीत श्रीसहित द्वादश तिलक काषाय अथवा सफेद वस्त्र त्रिदण्ड सहित चौथा-आश्रम संन्यास स्वीकृति है । 'वैष्णवाश्च द्विधा तत्रादण्डिनश्च त्रिदण्डिनः' इस वशिष्ठसंहिता के वचनानुसार विना त्रिदण्ड का भी संन्यास श्रीरामा नन्दसम्प्रदाय में स्वीकृत है । इसके भेद बहुत हैं यहाँ इस श्रीरामानन्द श्रीसम्प्रदाय में कौन संन्यास स्वीकृत है सो विवेचनीय है। श्रीनारदपरिव्राजकोपनिषद् में छ तरह के संन्यास के भेद हैं । १-कुटीचिक । २-बहूदक । ३-हंस । ४-परमहंस । ५-तुरीयातीत । ६-अवधूत । इनमें से विरक्त श्रीवैष्णवों का, परमहंस, संन्यास स्वीकृत है । कारण कि कुटीचक संन्यासी अपने घर में रहता है । जनक राजा के जैसा। बहूदक संन्यासी त्रिपुण्ड्र तिलक धारण करता है। हंस संन्यासी अपने हाथ से भोजन नहीं बनाता है किन्तु द्विजातीय के घरों से भिक्षा मांग के खाता है । तुरीयातीत संन्यासी वस्त्र नहीं धारण करता है, नङ्गा रहता है। द्विजातीय के घरों से भिक्षा मांग कर खाता है । भिक्षा मांगने जब जाता है उस समय वस्त्रों को केवल कटिभाग में पहिर लेता है । एक दम नङ्गे को गृहस्थों के घर में जाना नहीं हो सकता है। अवधूत संन्यासी सभी वर्णों के घर से भिक्षा मांग के खाता है । विरक्त श्रीवैष्णवों का तो इन पांच तरह का व्यवहार नहीं है। इसलिए विरक्त श्रीवैष्णवों का परमहंस संन्यास है । कारण कि वेदव्यासजी के पुत्र श्रीशुकदेवमुनिजी श्रीरामानन्द-श्रीसम्प्रदाय के अन्तर्गत हैं कारण कि वेदव्यासजी श्रीरामानन्द-श्रीसम्प्रदाय के ७वें आचार्य हैं। अतः आपके शिष्य श्रीशुकार्यजी ८वें आचार्य हुये । अतः श्रीमद्भागवत में श्रीशुकदेव मुनिजी के लिए बहुत स्थलों पर परमहंस पद का प्रयोग किया गया है ॥४९॥

देवभाषा सतीपाठ्या विरक्तैः वैष्णवैः समैः ।
तां विना निजधर्मोऽपि शशशृङ्गायते ध्रुवम् ॥५०॥

समैः सर्वैः रञ्जनं रक्तम् रागार्थकाद्रञ्जधातोः 'नपुंशकेभावे क्तः' इत्यनेन भावे क्तप्रत्ययः । 'अनिदितामिति न लोपः' विगतं रक्तं सांसारिकजन्यपदार्थेभ्योः रागोऽभिलाषोयेभ्यस्तेविरक्तास्तैः । वेवेष्टि सर्वत्र व्याप्नोतीतिविष्णुः सर्वत्र व्यापकः श्रीरामः स भक्तिर्भजनीयोऽस्त्येषान्ते वैष्णवाः स्तैः 'भक्ति' इति पाणिनीयसूत्रेण विष्णुशब्दात् भजनीयेऽर्थेऽण् प्रत्ययः । सती पवित्रा देवानां गीर्वाणानाम् भाषा गीः । देवभाषासंस्कृत भाषेतियावत् । पठितुं योग्या पाठ्या पठितव्या वर्तते इति शेषः पठ्धातोः 'ऋहलोर्ण्यत्' इति ण्यत् प्रत्ययः । तां देवभाषां विना संस्कृतभाषाऽध्ययनाभावे इति यावत् । 'पृथक् विनानानाभिस्तृतीयाऽन्यतरस्यामिति षष्ठ्यर्थे द्वितीयाविभक्तिः । इयमुपपदविभक्तिर्ज्ञेया-पदमाश्रित्यजायमाना विभक्ति एव पदविभक्तिः' इति भट्टोजिदीक्षितः । सर्वा उपपदविभक्तयः षष्ठ्यपदादिकाभवन्तीति व्युत्पत्तिवादे गदाधरभट्टाचार्याः । निजश्चासौ धर्मश्चेति निजधर्मः स्वधर्मः । 'यतोभ्युदयनिःश्रेयससिद्धिः सधर्मः' इति कणभुक् 'वेद प्रतिपाद्यः प्रयोजनवदर्थोधर्मः' इति पूर्वमीमांसकः । 'वेदः स्मृतिः सदाचारः स्वस्य च प्रियमात्मनः । एतच्चतुर्विधं प्राहुः साक्षाद् धर्मस्य लक्षणमिति मनुः । शशस्य श्रृङ्गम् शशश्रृङ्गम् । शशश्रृङ्गमिवाचरतीति शशश्रृङ्गायते । 'उपमानादाचारे' इत्याचारार्थेक्यङ् प्रत्ययः । यथा शशश्रृङ्गम् लोके न प्रतीयते तथा संस्कृतविद्यां विना श्रीवैष्णवधर्मोऽपि न प्रतियते न ज्ञायते इति यावत् । ध्रुवमिति निश्चयार्थकमव्ययम् ॥५०॥

समस्त विरक्त-गृहस्थ श्रीवैष्णवों को पवित्र देवभाषा संस्कृतभाषा पढना चाहिए । कारण कि संस्कृत भाषा बिना पढे विरक्त या गृहस्थ श्रीवैष्णवों का धर्म विशिष्टाद्वैत सिद्धान्त नहीं जानने में आवेगा । कारण कि यह सिद्धान्त बहुत गम्भीर है, संस्कृत भाषा सम्यक् पढने पर भी साम्प्रदायिक विरक्त विद्वानों से विशिष्टाद्वैत सिद्धान्त जानना पडता है । मुख्य-मुख्य ग्रन्थों को विरक्त श्रीवैष्णव पण्डितों से पढना पडता है जो संस्कृत भाषा विल्कुल ही नहीं पढा है तो उसके लिए शशश्रृङ्ग के तरह प्रसिद्धि रहित विशिष्टाद्वैत हो जाता है यह निश्चय है ॥५०॥



सद् व्याख्यानैः सदाचारैः स्वधर्माचरणैस्तथा ।
आत्मनश्च जनताया हितं कुर्याद्धिवैष्णवः ॥५१॥

वैष्णवो विरक्त इति शेषः । यद्यपि वैष्णवगृहस्थो विरक्तश्चेति व्यावहारिकोभेद इह च विरक्त एव वैष्णवो गृह्यते न गृहस्थः । कथन्तथाहि 'गृही गुरुर्न कर्तव्यो न तरति न तारयेत् । काष्ठस्य क्रियते नौका तयैव जलतारणम्' पाषाणस्य हि या नौका नहि तथा जलतारणम्' इत्यादि नारदगीता वचनप्रमाणत्वात् । ननु-वर्णानां ब्रह्मणोगुरुः' इति स्मृतिवचनेन ब्राह्मणस्यैव गुरुत्वं विधीयते नहि ब्राह्मणो विरक्तोपलब्धो भवति किन्तु गृहस्थ एव ततश्च कथमुच्यते विरक्त एव वैष्णवोगृह्यतेऽत्रोच्यते उक्तनारदगीतावचनप्रमाणेन विरक्त एव गुरुर्भवितुमर्हति नहि गृहस्थः । यः स्वयमेव प्रपञ्चेरतः सकथमन्यं प्रपञ्चात् दूरीकर्तुं समर्थो भवितुमर्हति प्रत्यक्षप्रमाणेन दर्शनात् । अत इह वैष्णवपदेन विरक्तब्राह्मण एव वैष्णवो गृह्यते । यदि विरक्तो भूत्वा प्रपञ्चे संलग्नो नहि सोऽपि गुरुभवितुमर्हति । तथैवालीकं शङ्कावचनं यद्ब्राह्मणो गृहस्थ एवेति श्रीशुकाचार्यानन्दभाष्यकारप्रभृतिसहस्त्रसोमहाविरक्तानां सर्वजनप्रसिद्धत्वात् ।

मुक्तिसाधननिरूपणप्रस्तावे जगदाचार्यचरणास्तु श्रीवैष्णवमताब्जभास्करे-

'यतेन्द्रियः शुचिः शुद्धवेशधृक् सुकुलोद्भवः ।
सदाचारपरो नम्रः शास्त्रज्ञोदेशनापटुः ॥
विरक्तधर्मनिरतो ध्यानाभ्यासीसुबुद्धिमान् ।
निग्रहेऽनुग्रहे चैव समर्थो देशिकोमतः ॥
हीनाङ्गो ह्यधिकाङ्गश्च कपटी कृष्णदन्तवान् ।
नेत्ररोगी च कुष्ठी च वावदुकश्चवामनः ॥
व्यसनी बहुनिद्रश्च कुनखी बहुभोजनः ।
नेदृशोदेशिको योग्योमुमुक्षोर्मुक्तिसाधने ॥ (४।३-६)

इत्यादिकमाहुः । एतद्व्याख्याने षड्दर्शनाचार्यप्रवरजगद्गुरुश्रीबालानन्दाचार्यमहाभागाः 'सुष्ठु शोभनकुलो गोत्रप्रवर्तकान्यतमवशिष्ठादिकुलेषु उद्भवः संजात इति सुकुलोद्भवः श्रीवशिष्ठादिपरम्परान्वितश्रेष्ठब्राह्मणादेव दीक्षा ग्राह्या भवसागरतितीर्षुभिरितिशेषः' इत्याहुः । इत्थञ्च यथाशास्त्रसम्प्रदायपरम्परया

गृहीतदीक्षाकविरक्तब्राह्मणादेव तारकदीक्षा ग्राह्या भवतीतिर्षुभिरितिदिक् । सन्ति च तानि व्याख्यानाति सद्व्याख्यानानि तैः सदुवदेशैः । यः स्वयं सदुप देशाननुगुणः कथं सोऽन्यं सदुपदेशेन पवित्रयेत् । सतामाचाराः सदाचारास्तैः । सभ्याप्तानुगुणैः । तेन प्रकारेणेति तथा स्वश्चासौ धर्मश्चेति स्वधर्मस्तस्य चरणानि स्वधर्माचरणानि तैः । विरक्तवैष्णवधर्मवर्तनैः । आत्मनः स्वस्य च पुनः जनानां समूह इति जनता तस्याः जनसमूहस्य प्राणिवर्गस्य । 'ग्रामजनबन्धुभ्यस्तल्' इति समूहार्थे तल् प्रत्ययः । तलन्तं स्त्रियामिति स्त्रीत्वम् । हितम् ऐहिकपारलौकिक कल्याणं कुर्याद् विदध्यात् हिंनिश्चयेऽव्ययम् । यः स्वयमेव सदाचारभ्रष्टः स कथ मन्यं सन्मार्गे प्रवर्तयितुं शक्नोति । अतो यो लोकस्य स्वोपदेशेनकल्याणमिच्छेत् स प्रथमं स्वयमेव सदाचारवान् भवेदिति । यथा सत्यगुणनिलयो विष्णुस्तथैव यदि सत्वगुणको यो वैष्णवः स्यात् स एवस्वस्यजनतायाश्चहितं कर्तुमर्हेदिति-भावः ॥५१॥

निश्चय करके श्रीवैष्णव को धार्मिक प्रवचनों से तथा सदाचारों से और अपने धर्म के आचरणों से अपना और जनता का हित करना चाहिए। आज जगत् में उपदेश उसी व्यक्ति विशेष का जनता के लिए लाभप्रद हो सकता है जो अपने आप स्वयं सच्चा सच्चरित्र भगवत् सद्भक्त है जो अपने आप ही सदाचार हीन है भगवत् सद्भक्ति हीन है उनका उपदेश किसी भी प्राणी के लिए लाभप्रद नहीं हो सकता है। किसी ने ठीक ही कहा है-यत्र वक्तरि सन्देहस्तत्र श्रोतृणां का कथा, जहां वक्ता के उपदेश में ही सन्देह है सदाचारिता नहीं है वहां सुनने वालों में तो सन्देह सदा चारिता हीनता रहेगी ही ऐसे उपदेशों से कुछ लाभ नहीं होता है ॥५१॥

**एकमेवाद्वितीयं न भोः सिद्ध्यते वाक्यतोऽद्वैतवादश्च तन्नेति वै ।**
**एकशब्दोऽस्ति नामादिभिर्घातको ह्यद्वितीयं पराधारहीनं पदम् ॥५२॥**

अस्मिञ्छ्लोके प्रच्छन्नबौद्धमायावादद्वैतवादिनां मतं खण्डयित्वा विशिष्टाद्वैतवाद (!दि) मतस्थापनाऽस्ति । केवलाद्वैतवादिनं विशिष्टाद्वैतवादी वदति यत् हे केवलाद्वैतवादिन् ! भवाञ्छृणोतु । 'एकमेवाद्वितीयम्' इत्यनेन वाक्येन भव दभीष्टमतं न सिद्ध्यति यतो नूनं तस्मिन् 'एकमेवाद्वितीयम्' इत्यस्मिन् वाक्ये एकशब्दः प्रलयकालेऽपि समस्तचेतनजडपदार्थः सत्य एवास्ति । एकशब्देनेदं



सूच्यते यत् सृष्टिकाले तु समस्तचेतनजडपदार्थः सत्योऽस्ति । अयं देवोऽस्ति, अयं मनुष्योऽस्ति' इत्यादिनाम, तथा अयं कृष्णोऽस्ति, अयं गौरोऽस्ति, अयं स्थूलोऽस्ति, अयं कृशोऽस्ति, इत्यादिरूपनाम तथा रूपं प्रतीयेते, अपि च प्रलय काले 'अयं देवोऽस्ति, अयं मनुष्योऽस्ति, अयं कृष्णोऽस्ति, अयं गौरोऽस्ति अयं स्थूलोऽस्ति, अयं कृशोऽस्ति, इत्यादिनामरूपस्य च भेदशून्यपरोऽस्ति, सृष्टि काले नामरूपविभागयोग्योऽयं समस्तचेतनजडपदार्थोऽस्ति, प्रलयकाले च नाम रूपभेदरहितसमस्तचेतनजडपदार्थोऽस्ति' अयमेवैकशब्दार्थोऽस्ति । कालभेदेन नामरूपभेदप्रतीतिरथवा तदप्रतीतिरेतावान् भेदोऽस्ति, यत उद्दालकऋषिः पुत्रः श्वेतकेतुर्याज्ञवल्क्यऋषिमुपजगामाध्येतुम् । षोडशवर्षाणि अधीत्य यदा स्वपित रमाजगाम, तदा तं पिता (उद्दालकः) पप्रच्छ यत् हे पुत्र ! (श्वेतकेतो !) त्वं गुरोरधीत्यागतोऽसि । त्वमिदं कथय-अयं समस्तचेतनजडपदार्थः सर्वथा सत्योऽस्ति किंवा मिथ्याऽस्ति ? । तदा पुत्रः किमपि न प्रत्युवाच । तदा पितो वाच त्वं गत्वा गुरुम्पृष्ट्वा यथावदुत्तरं देहि । तदा श्वेतकेतुः पुनः स्वगुरुमुपजगाम पितृपृष्टं च पप्रच्छ । ततो गुरुः प्रत्युवाच 'सदेव सौम्येदमग्र आसीदेकमेवाद्विती यम्' हे शिष्य ! (श्वेतकेतो !) इदं दृश्यमानं समस्तजडचेतनात्मकं वस्तु सृष्टेः प्राक् प्रलयकाले सदेव-सत्यमेव तिष्ठति, किन्तु नामरूपविभागरहितमासीत् अय मैवैकमित्यस्यार्थः वाढं सृष्टिकाले नामरूपविभागसहितमेव समस्तजडचेतनवस्तु वर्तते, इयानेवभेदोऽस्ति । सर्वथा समस्तजडचेतनपदार्थाभावो जातुचिन्नास्ति । यतः प्रलयकाले यदि पदार्थानामभावः स्यात् तदातु असत् स्यात् । किन्तु अग्रे पुनर्गुरुः शिष्यमाह 'नह्यसतः सज्जायेत' हे शिष्य ! यदि कदाचिदयं पदार्थो विद्यते तदा तु असन्नभूत्, असतः सदुत्पत्तिर्न भवति, यदि कदाचित् क्वचित् काले पदार्थानामभावो भवेत्, 'सदेव' इत्यत्र 'एव'-पदं किमर्थंदत्तम्, अस्योत्तरं न भवितुमर्हति, यत् प्रलयकाले जगन्नासीत् एतादृशोऽर्थः क्रियेत ? अयं समस्त जडचेतनात्मकः पदार्थः सर्वदाऽस्ति, भेद एतावानेवास्ति यत् सृष्टिकाले नामरूप विभागो भवति, प्रलयकाले नामरूपविभागो न तिष्ठति, 'ब्रह्म सत्यं जगन्मिथ्या जीवो ब्रह्मैव नेतरः' अस्य वाक्यस्य व्याख्यैवमस्ति ब्रह्म तु सत्यमस्ति, कदापि ब्रह्मणोऽभावो न भवति, 'जगन्मिथ्या' अस्यायमर्थोऽस्ति-यत् मिथ्याशब्देनेदं

प्रतीयेत यत् प्रलयकाले समस्तजडचेतनात्मकं जगत् नामरूपविभागशून्यं तिष्ठ ति, सृष्टिकाले नामरूपविभाग एव तिष्ठति, यदि सर्वथा मिथ्या मन्येत अभावो मन्येत तदा 'सदेव' इत्यत्र 'एव' पदं व्यर्थं भवेत्, 'जीवो ब्रह्मैव' इत्यस्यभा-वोऽयमस्ति-पाणिनिमुनिकृत-वैदिकप्रकरणे 'व्यत्ययोबहुलम्' इत्यस्मिन् सूत्रे सुपः प्रथमा द्वितीया तृतीया चतुर्थी पञ्चमी षष्ठी सप्तमी विभक्तीनां व्यत्ययो भव तीति प्रकृते । 'ब्रह्म' इत्यत्र तृ. ३।४।५।६।७ विभक्तिस्थाने प्रथमाविभक्तिर्जाता । 'यदर्थबाधिका विभक्तिस्तदर्थं प्रतिपादयति' इयं पंक्तिर्महावैयाकरणनागेशभट्ट स्य विद्यते । 'कथं तर्हि गां दोग्धि पयः' इति प्रयोगः संगच्छते ? किं गौदुग्धं दोग्धि' अयमर्थः संगच्छते ? अपि तु नहि । गोदुग्धं दोग्धि' अयमेनार्थः संगच्छ ते । अत्र ( ब्रह्मेत्यत्र ) प्रथमाविभक्तिर्यद्यदर्थे समागता, तत्तदर्थमेव वक्ष्यति, तदा 'ब्रह्मैव' इत्यत्र 'एव'-पदं कथयति यत् जीवो ब्रह्मणा प्रतीयते । क्वचिदपि कार्य विधौ समर्थो भवति । ब्रह्मण एव जीवस्य सत्ताऽस्ति, यतो जीवो ब्रह्मणः शरी रमस्ति, एतदर्थं ब्रह्मण एव वर्तते, यतो जीवो ब्रह्मणः शेषपदार्थो भोग्यपदार्थश्च विद्यते वस्त्रादिवत्, जीवस्य सत्ता ब्रह्मण्येवास्ति, यतो ब्रह्म व्यापकं सर्वज्ञं सर्व शक्तिमदस्ति, जीवोऽल्पज्ञोऽस्ति व्याप्यश्च, सर्वशक्तिरहितश्च । 'इतरः' इत्यत्रापि तेनैव पाणिनिसूत्रेण ३।४।५।६।७ विभक्तिनां स्थाने प्रथमाविभक्तिर्जाता, 'नेतरः' ब्रह्मणोऽन्येन जीवस्य सत्तानास्ति अन्यस्मै नास्ति, अन्यस्मान्नास्ति अन्यस्य भोग्यपदार्थो नास्ति, किन्तु ब्रह्मण एव भोग्यपदार्थो जीवोऽस्ति, शेषत्वेन ब्रह्म भिन्नेनजीव तस्य स्थितिप्रभृतिर्नास्ति । नूनम् 'अद्वितीयं पदस्यायंभावः-यत् प्रल यकाले तथा सृष्टिकालेऽपि समस्तजडचेतनात्मकपदार्थो ब्रह्मातिरिक्ते नहि स्थिति मानस्ति, किन्तु सर्वदा ब्रह्मण्येव स्थितिमानस्ति, अतः-एकमेवाद्वितीयम्' इत्य स्योक्तोऽर्थोऽस्ति, विशिष्टाद्वैतवादिमतेनायमेवार्थः संगच्छतेऽपि । भवतो-योऽर्थोऽस्ति, एकमेव ब्रह्म सत्यमस्ति, शेषं समस्तजडचेतनात्मकं जगत् मिथ्या ऽस्ति, अर्थात् सर्वथा न तिष्ठति । व्यवहारदशायां सत्यता प्रतीयते, वस्तुतो ब्रह्म णोऽतिरिक्तः कश्चिदपि पदार्थो यथार्थो नास्ति । अयमर्थो बौद्धमायावादिनां केवलाद्वैतवादिनामर्थो नितरामसङ्गतोऽस्ति । यतः श्रुतितः समस्तचेतनजडात्मक पदार्थो ब्रह्मशरीरं सिद्धमस्ति, 'य आत्मनि तिष्ठन्नात्मान्तरोयमात्मा न वेद यस्या



त्मा शरीरं य आत्मानमन्तरो यमयत्येष त आत्मा अन्तर्याम्यमृतः । यो जगति तिष्ठन् जगदन्तरो यं जगन्न वेद, यस्य जगच्छरीरं यो जगदन्तको ( ?रो ) यमय त्येष त आत्माऽन्तर्याम्यमृतः, इत्यादिभिश्चेतनजडसमस्तपदार्थम्ब्रह्मशरीरमभि धीयते । ब्रह्म सत्यमस्ति, तदा ब्रह्मणः शरीरमपि नित्यमेवास्ति । भवदीयः प्रश्नो भवति, यद् जीवो नित्योऽस्ति, तदाजीवस्य शरीरमनित्यं कथम् ? उत्तरम्-जी वस्य शरीरे प्रवेशोऽमुकावधयेऽस्ति, यतो 'भोगायतनं शरीरम्' एतद्गौतमऋषि मतानुसारं जीवस्य शरीरे प्रवेशः पूर्वजन्मकृतशुभाशुभकर्मफलं भोक्तुमस्ति, ब्रह्मपक्षे शरीरस्य लक्षणमीदृशमस्ति-'स्वेच्छया प्रयोज्यं शरीरम्' ब्रह्मण इच्छया प्रयोज्यं कर्मफलं भोक्तुं तत्तच्छरीरेषु प्रेषणम् । अयमर्थोऽस्ति, अयं चेतनो जी-वोऽथवाऽयंजडो जीवः पूर्वजन्मनि यादृग्यादृक् कर्मवानासीत् तदनुसारं तत्तद्यो निषु प्रेषणम्, तथा तत्तद्योनिषु तत्तत्कर्मानुसारफलदापना ।

यथैको राजा निजप्रजाभ्यः कर्मानुसारं लाभहानिदण्डं दापयति तथैव ब्रह्मणोऽपि जडचेतनात्मकजीवेभ्यस्तत्तत्कर्मानुसारं सुखदुःखात्मकफलदापनैव शरीरशरीरिताऽस्ति । अत्र नित्यानित्य प्रश्नः एव नास्ति । इह तु प्रयोज्यप्रयो जकभाव एव शरीरशरीरिभावोऽस्ति । प्रयोजकं ब्रह्मास्ति, इदं स्वतन्त्रतयैवान्य दीयाज्ञां विनैव तत्तज्जीतेभ्यः तत्तत्कर्मफलं दापयति । 'कर्मफलप्रयोज्यं शरी रम्' 'स्वतन्त्रप्रयोज्यः शरीरी' समस्ताजीवाः प्रयोज्याः सन्ति, ब्रह्म प्रयोजक मस्ति, स्वतन्त्रजीवः प्रयोज्योऽस्ति कर्माधीनतया राजा शुभाशुभकर्मफलदाने स्वतन्त्रोऽस्ति । तथा ब्रह्मापि तत्तज्जीवाय तत्तत्कर्मफलदाने स्वतन्त्रमस्ति । इद मेव शरीरलक्षणमस्ति-'स्वेच्छया प्रयोज्यं शरीरम्' अस्य व्याख्या जाता उक्त प्रश्नोऽनित्यविषयको निर्मूलोऽभूत् ।।५२।।

इस श्लोक में प्रच्छन्न बौद्ध मायावादी अद्वैतवादियों के मत को खण्डन करके विशिष्टाद्वैतवादमत का स्थापन है । केवल अद्वैतवादी से विशिष्टाद्वैतवादी कह रहा है कि-हे केवल अद्वैतवादी आप सुनिए-एकमेवाद्वितीयम्' इस वाक्य से आपका अभीष्ट मत सिद्ध नहीं होता है क्योंकि निश्चय करके उस एकमेवाद्वितीयम् इस वाक्य में एक शब्द प्रलयकाल में भी समस्त चेतन जडपदार्थ सत्य ही है, एक शब्द से यह सूचित होता है कि सृष्टिकाल में तो समस्त चेतन जडपदार्थ सत्य है यह देव

है यह मनुष्य है इत्यादि नाम तथा यह काला है यह गोरा है यह मोटा है यह पतला है इत्यादि रूप नाम तथा रूप प्रतीत होते हैं और प्रलयकाल में यह देव है यह मनुष्य है यह काला है यह गोरा है यह मोटा है यह पतला है इत्यादि नाम और रूप के भेद से रहित परक है सृष्टि काल में नामरूप के विभाग के योग्य यह समस्त चेतन जडपदार्थ है और प्रलयकाल में नाम तथा रूप के भेद से रहित समस्त चेतन तथा जड़ पदार्थ है यही एक शब्द का अर्थ है। कालभेद से नामरूप की प्रतीती होना अथवा नामरूप की प्रतीती न होना ही इतना भेद है सर्वथा समस्त चेतन जड़पदार्थों का अभाव कभी होता ही नहीं है। कारण की उद्दालक ऋषि का पुत्र श्वेतकेतु याज्ञवल्क्य ऋषिजी के पास पढने के लिए गया १६ वर्ष तक पढ के जब अपने पिता के पास आया तब पिता ने प्रश्न किया की हे पुत्र श्वेतकेतो तुम गुरुजी से पढ आए हो यह तो बताओ कि यह समस्त जड़चेतनात्मक पदार्थ सर्वथा सत्य है कि मिथ्या, तब पुत्र कुछ उत्तर न दे सका तब पिताजी ने कहा जाके गुरुजी से पूछ के ठीक-ठीक उत्तर दो तब श्वेतकेतु पुनः गुरुजी के पास गया और अपने पिता के प्रश्न को पूछा गुरुजी से तब गुरुजी उत्तर देते हैं-सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम्। हे शिष्य यह देखा जाता हुआ समस्त जड़चेतनात्मक पदार्थ सृष्टि के पहले प्रलयकाल में सत्य ही रहा है किन्तु नामरूप विभाग रहित था यही एकम् का अर्थ है। हाँ सृष्टिकाल में नामरूप विभाग सहित ही समस्त जड़चेतनात्मक पदार्थ है इतना ही भेद है सर्वथा समस्त पदार्थों का अभाव कभी नहीं होता है। क्योंकि यदि प्रलयकाल में पदार्थों का अभाव हो जावे तो तब तो असत् हो गया। किन्तु आगे फिर गुरुजी शिष्य से कहते हैं कि-नह्यसतः सज्जायेत। हे शिष्य यदि कभी यह पदार्थ नहीं रहता है तब तो असत् हो गया। असत् से सत् की उत्पत्ति होती नहीं है। यदि कभी किसी काल में पदार्थों का अभाव होता तो 'सदेव' यहाँ एव पद क्यों दिया गया इसका उत्तर नहीं हो सकता है कि प्रलयकाल में जगत् नहीं था ऐसा अर्थ नहीं किया जा सकेगा। यह समस्त जड़चेतनात्मक पदार्त हमेशा रहता है भेद इतना ही है कि सृष्टिकाल में नामरूप विभाग होता है और प्रलयकाल में नामरूप विभाग नहीं रहता है। ब्रह्म सत्यं जगन्मिथ्या जीवो ब्रह्मैवतेतरः।

इस वाक्य की व्याख्या इत तरह से है-ब्रह्म तो सत्य ही है किसी भी काल



में ब्रह्म का अभाव नहीं होता है। जगन्मिथ्या इसका यह अर्थ है कि मिथ्या शब्द से यह प्रतीत होता है कि प्रलयकाल में समस्त जड़चेतनात्मक जगत् का नामरूप विभाग नहीं रहता है। सृष्टिकाल में नामरूप विभाग रहता ही है। यदि सर्वथा मिथ्या माने अभाव माना जाय तो, (सदेव) यहां पर एव पद व्यर्थ हो जायगा। जीवो ब्रह्मैव इसका भाव यह है-पाणिनि मुनिकृत वैदिक प्रकरण के-व्यत्ययो बहुलम्। इस सूत्र से तृतीया चतुर्थी पञ्चमी षष्ठी सप्तमी विभक्तियों के स्थान में 'ब्रह्म' यहां प्रथमा विभक्ति हो गई है। यदर्थबाधिका विभक्तिस्तदर्थं प्रतिपादयतिः। यह पंक्ति महा वैयाकरण नागेशभट्टजी की है। 'कथन्तर्हि गां दोग्धिपयः' इति प्रयोगः सङ्गच्छते? क्या गौ के दूध को दुहता है यह अर्थसंगत है? नहीं। गौ से दूध को दुहता है यही अर्थ संगत है। वहां प्रथमा विभक्ति जिस-जिस अर्थ में आई है उसी उसी अर्थ को कहेगी। तो 'ब्रह्मैव' यहां एव पद बतलाता है कि जीव ब्रह्म के द्वारा ही प्रतीत होता है। कुछ भी कार्य करने में समर्थ होता है। ब्रह्म से ही जीव की सत्ता है कारण कि जीव ब्रह्म का शरीर है इसलिए। ब्रह्म के लिए ही जीव है कारण कि जीव ब्रह्म का शेष पदार्थ भोग्य पदार्थ है। वस्त्र आदि के तरह। जीव की सत्ता ब्रह्म में ही है कारण कि ब्रह्म व्यापक, सर्वज्ञ सर्वशक्तिमत् है। जीव अल्पज्ञ है, व्याप्य है, सर्वशक्तिरहित है। इतरः, यहां भी उसी पा.मु. के सू. से ३-४-५-६-७ विभक्तियों के स्थान में प्रथमा विभक्ति हो गई है। नेतरः। ब्रह्म से अन्य के द्वारा जीव की सत्ता नहीं है। अन्य के लिए नहीं है, अन्य से नहीं है। अन्य का भोग्यपदार्थ नहीं है किन्तु ब्रह्म का ही भोग्यपदार्थ जीव है शेष होने से ब्रह्म से अन्य में जीव की स्थिति आदि नहीं है।

निश्चय करके अद्वितीय पद का यह भाव है कि-प्रलयकाल में तथा सृष्टिकाल में भी समस्त जड़चेतनात्मक पदार्थ ब्रह्म से अतिरिक्त में नहीं स्थितिवाला है किन्तु सर्वकाल में ब्रह्म में ही स्थितिवाला है। अतः-एकमेवाद्वितीयम् का उक्त अर्थ है विशिष्टाद्वैतवादियों के मत से यही अर्थ सङ्गत भी है। आपका जो अर्थ है एक ही ब्रह्म सत्य है बांकी समस्त जड़चेतनात्मक जगत् मिथ्या है माने सर्वथा नहीं रहता। व्यवहार दशा में सत्यता मालूम पड़ता है वस्तुतः ब्रह्म के अतिरिक्त कोई भी पदार्थ नहीं है यह प्रच्छन्न बौद्ध मायावादी केवल अद्वैतवादी का अर्थ बिलकुल ही असङ्गत

है। कारण कि श्रुतियों से समस्त चेतनजड़ात्मक पदार्थ ब्रह्म का शरीर सिद्ध है। 'य आत्मनि तिष्ठन्नात्मान्तरोयमात्मा न वेद यस्यात्मा शरीरं य आत्मानमन्तरोयमयत्येष त आत्मा अन्तर्याम्यमृतः। यो जगति तिष्ठन् जगदन्तरो यं जगन्नवेद यस्य जगच्छरीरं यो जगदन्तरोयमयत्येष त आत्मा अन्तर्याम्यमृतः। इत्यादि से चेतन जड़ समस्त पदार्थ को ब्रह्म का शरीर कहा जाता है तो ब्रह्म सत्य है तो ब्रह्म का शरीर भी नित्य ही है। आपका प्रश्न होगा कि-जीव नित्य है तो जीव का शरीर अनित्य क्यों है? उत्तर-जीवों का शरीर में प्रवेश अमुक अवधि के लिये है क्योंकि-भोगायनं शरीरम् इस गौतम महर्षि के मतानुसार जीवों का शरीर में प्रवेश पूर्वजन्मकृत शुभाशुभ कर्म फल भोगने के लिए ही है। ब्रह्मपक्ष में शरीर का लक्षण ऐसा है-'स्वेच्छया प्रयोज्यं शरीरम्' ब्रह्म की इच्छा से प्रयोज्य कर्मफल भोगने के लिये तत् तत् शरीरों में भेजना यह अर्थ है। यह चेतन जीव अथवा यह जड जीव पूर्वजन्म में जैसे-जैसे कर्मवाले थे उसके अनुसार तत् तत् योनियों में भेजना तथा तत् तत् योनियों में उन-उनके कर्मानुसार फल दिलाना, यह अर्थ है।

जैसे एक राजा अपनी प्रजाओं के कर्मानुसार लाभ अथवा हानी का दण्ड दिलाता है वैसे ही ब्रह्म का भी जड़चेतनात्मक समस्त जीवों को उन-उनके कर्मानुसार सुख तथा दुःख रूप फल को दिलाना ही शरीर शरीरीभाव है। यहां नित्यानित्य का प्रश्न ही कहाँ है? यहाँ तो प्रयोज्य प्रयोजकभाव ही शरीर शरीरीभाव है प्रयोजक ब्रह्म है यह स्वतन्त्रता से ही दूसरे की आज्ञा के विना ही तत् तत् जीवों को तत् तत् कर्मफल दिलाता है। कर्म तन्त्र प्रयोज्यं शरीरम्। स्वतन्त्र प्रयोज्यं शरीरी। समस्त जीव प्रयोज्य है ब्रह्म प्रयोजक है स्वतन्त्रता से जीव प्रयोज्य है कर्माधीनता से राजा शुभाशुभ फल देने में स्वतन्त्र है। वैसे ब्रह्म भी तत् तत् जीव को तत् तत् फल देने में स्वतन्त्र है। यही शरीर का लक्षण है-स्वेच्छया प्रयोज्यं शरीरम्। इसकी व्याख्या हो चुकी है। अतः उक्त प्रश्न अनित्य विषयक निर्मूल हो गया ॥५२॥

**रामः कुजा वायुसुतो विधिः सुधीः श्रीमान् वशिष्ठः सुपराशरोनुतः।**
**व्यासः शुकः संसृतिजीवमोक्षदस्त्वित्यादिकाऽऽचार्यपरम्पराऽस्ति मे ॥५३॥**

श्रीरामः श्रीसीतायै षडक्षरतारकश्रीराममन्त्रं ददौ। श्रीसीता श्रीहनुमते षडक्षरतारकमन्त्रं ददौ। श्रीहनुमान् ब्रह्मणे तं ददौ, श्रीमान् ब्रह्मा श्रीवशिष्ठाय



वशिष्ठस्तं प्रशंसनीयाय श्रीपराशरायेति पराशरस्तं श्रीव्यासाय ददौ, श्रीव्यासो ब्रह्मवित् संसारवर्तिनो जीवान् सायुज्यमुक्तिं प्रापयितुं श्रीशुकदेवाय षडक्षर तारकं 'रां रामाय नमः' इमं मन्त्रराजं ददौ। श्रीशुकदेवस्तं बोधायनश्रीपुरुषोत्तमाचार्याय ददौ। श्रीबोधायनान्तरं परम्परेत्थमस्ति-श्रीगङ्गाधराचार्यः श्रीसदानन्दाचार्यः श्रीरामेश्वरानन्दाचार्यः श्रीद्वारानन्दाचार्यः श्रीदेवानन्दाचार्यः श्रीश्यामानन्दाचार्यः श्रीश्रुतानन्दाचार्यः श्रीचिदानन्दाचार्यः श्रीपूर्णानन्दाचार्यः श्रीश्रियानन्दाचार्यः श्रीहर्यानन्दाचार्यः श्रीराघवानन्दाचार्यः प्रस्थानत्रयस्याऽऽनन्दभाष्यकारो जगद्गुरुश्रीरामानन्दाचार्यः श्रीसुरसुरानन्दाचार्यः श्रीमाधवानन्दाचार्यः श्रीगरीबदासाचार्यः श्रीलक्ष्मीदासाचार्यः श्रीगोपालदासाचार्यः श्रीनरसिंहदासाचार्य महाराजः' इत्यादिका अस्माकमाचार्यपरम्परा गुरुपरम्परा वर्तते प्रकृतपरम्परा मूलकश्रुतिवाक्यम् 'इममेव मनुंपूर्वं साकेतपतिर्मामवोचत्। अहं हनुमते मम प्रियाय प्रियतराय। स वेदवेदिने ब्रह्मणे। स वशिष्ठाय। स पराशराय। स व्यासाय। स शुकाय। इत्येषोपनिषदित्येषामब्रह्मविद्या (श्रीमैथिलीमहोपनिषद् ५) तथा चागस्त्यसंहितावचनम् 'ब्रह्मा ददौ वशिष्ठाय स्वसुताय मनुं ततः। वशिष्ठोऽपि स्वपौत्राय दत्तवान् मन्त्रमुत्तमम् ॥ पराशराय रामस्य मन्त्रं मुक्तिप्रदायकम्। स वेदव्यासमुनये ददावित्थंगुरुक्रमः' तथैवाहुः श्रीआनन्दभाष्यकारश्रीचरणा गीतानन्दभाष्ये-

'श्रीरामं जनकात्मजामनिलजं वेधो वशिष्ठावृषी
योगीशं च पराशरं श्रुतिविदं व्यासं जिताक्षं शुकम्।
श्रीमन्तं पुरुषोत्तमं गुणनिधिं गङ्गाधराद्यान्यतीन्
श्रीमद्राघवदेशिकं च वरदं स्वाचार्यवर्यं श्रये ॥'

अतोऽनेन श्रीसम्प्रदायीयमूलपरम्परा बोधितमिति ज्ञेयम्। प्रकृतश्लोकस्थादिपदेन श्रीबोधायनमहर्षित आरभ्य श्रीनरसिंहाचार्यपर्यन्ताचार्याणां बोधो भवति। जगद्गुरुश्रीरामानन्दाचार्यानन्तरम् तदीयशिष्यतो श्रीरामानन्दीयषट्त्रिंशद्द्वाराचार्यतो वा गुरुपरम्परा चचाल। सा च भिन्नकल्पाऽजनिः कस्यचिज्जगद्गुरुश्रीमदनन्तानन्दाचार्यतः कस्यचिज्जगद्गुरुश्रीसुरसुरानन्दाचार्यतो गुरुपरम्परा विद्यते। जगद्गुरुश्रीकेवलरामकूवाचार्यमहाराजस्य गुरुपरम्परा

**जगद्गुरुश्रीसुरसुरानन्दाचार्यमहाराजतोऽस्तीति ज्ञेयम् ॥५३॥**

श्रीरामजी श्रीसीताजी को षडक्षरतारक श्रीराममन्त्र को दिए हैं। श्रीसीताजी श्रीहनुमानजी को षडक्षरतारक मन्त्र दिए हैं। श्रीहनुमानजी श्रीब्रह्माजी को श्रीमान् ब्रह्माजी श्रीमान् वशिष्ठजी को श्रीवशिष्ठजी प्रशंसनीय श्रीपराशरजी को श्रीपराशरजी श्रीव्यासजी को श्रीव्यासजी ब्रह्मज्ञानी संसार के जीवों के जीवों की सायुज्यमुक्ति को प्राप्त करवानेवाले श्रीशुकदेवजी को षडक्षर तारक 'रां रामाय नमः' इस मन्त्रराज को दिए हैं श्रीशुकदेवजी बोधायन महर्षि श्रीपुरुषोत्तमाचार्यजी को दिए। श्रीबोधायनजी के वाद की परम्परा इसप्रकार है-श्रीगङ्गाधराचार्यजी श्रीसदानन्दाचार्यजी श्रीरामेश्वरानन्दाचार्यजी श्रीद्वारानन्दाचार्यजी श्रीदेवानन्दाचार्यजी श्रीश्यामानन्दाचार्यजी श्रीश्रुतानन्दाचार्यजी श्रीचिदानन्दाचार्यजी श्रीपूर्णानन्दाचार्यजी श्रीश्रियानन्दाचार्यजी श्रीहर्यानन्दाचार्यजी श्रीराघवानन्दाचार्यजी प्रस्थानत्रय के आनन्दभाष्यकार जगद्गुरु श्रीरामानन्दाचार्यजी श्रीसुरसुरानन्दाचार्यजी श्रीमाधवानन्दाचार्यजी श्रीगरीबदासाचार्यजी श्रीलक्ष्मीदासाचार्यजी श्रीगोपालदासाचार्यजी श्रीनरसिंहदासाचार्यजी महाराज इत्यादिक हमारी आचार्य परम्परा-गुरु परम्परा है। आदि पद से श्रीबोधायन महर्षिजी से लेकर श्रीनरसिंहदासाचार्यजी तक के आचार्यों का बोध होता है। जगद्गुरु श्रीरामानन्दाचार्यजी के वाद में उनके शिष्यों या श्रीरामानन्दीय छत्तीस द्वाराचार्यों से गुरु परम्परा चली है सो कुछ भेद होगी किसी की जगद्गुरु श्रीअनन्तानन्दाचार्यजी से किसी की जगद्गुरु श्रीसुरसुरानन्दाचार्यजी से गुरु परंम्परा है। जगद्गुरु श्रीकेवलरामाचार्यजी महाराज की गुरु परम्परा रक्त श्री धारक स्वामी श्रीसुरसुरानन्दाचार्यजी महाराज से है। वे रक्त श्रीधारक थे नकि श्वेत श्री जगद्गुरु स्वामी श्रीरामानन्दाचार्यजी रक्त श्रीधारक थे तो इनकें प्रिय शिष्य स्वामी श्रीसुरसुरानन्दाचार्यजी कैसे श्वेत श्रीधारक हो सकते हैं? ॥५३॥

**अस्मन्मतं वरीवर्ति विशिष्टाद्वैतमीरितम् ।**
**ब्रह्मसूत्रेषु गीतायां सर्वोपनिषदि ध्रुवम् ॥५४॥**

नूनं व्यासदेवनिर्मितब्रह्मसूत्रेषु तथा श्रीभगवद्गीतायां समस्तासूपनिषत्सु वर्णितं विशिष्टाद्वैतसिद्धान्तात्मकमस्मदीयमतमस्ति । 'सर्वोपनिषदि' अत्रजात्याभिप्रायेणैकवचनमस्ति । जात्याभिप्रायस्थले एकवचनेन बहुवचनबोधो जायते 'सम्पन्नो ब्रीहिः' इतिवत् । 'ब्राह्मणं न हन्यात्' इतिवत् । तार्किकानामयं सि



द्धान्तः । श्रीशङ्कराचार्यः केवलमद्वैतं मन्यते अद्वैतं तत्रास्ति, अद्वैतमत्रास्मदीयसिद्धान्तेऽप्यस्ति । विशिष्टाद्वैतस्य व्याख्येत्थमस्ति द्वाभ्यांचिदचिद्भ्यामितं सर्वत्र व्याप्तम्, इह 'इण' धातोरर्थोव्यापको मन्यते, सामान्यत 'इण' धातोश्चत्वारोऽर्था भवन्ति, यथा ज्ञानम् 'घटः प्रतीयते' इत्यत्र, गमनम् 'ग्राममेति देवदत्तः' इत्यत्र, मोक्षः 'संसारादपैति' इत्यत्र, प्राप्तिः 'दानमेति' इत्यत्र । एवं चत्वारोऽर्था भवन्ति किन्तु 'परोभुवोऽवज्ञाने' इह पाणिनिसूत्रेऽवज्ञानग्रहणाद् धातूनां प्रसङ्गवषादनेकेऽर्थाजायन्ते । अतोऽत्र 'इण्'-धातोप्रापनमर्थोऽक्रियत । 'कर्तृकरणे कृता बहुलम्' इतिसूत्रेण तृतीयातत्पुरुषसमासो भवति अत्र 'समासस्येति सूत्रेणान्तोदात्तत्वो भवति । समासेकृते प्रातिपदिकत्वे तदवयवतृतीयासुग्विभक्तेर्लुप् भवति । ततः सवर्णदीर्घे कृते प्रातिपदिकत्वे तदवयवतृतीयासुव्विभक्तेर्लुग् भवति । ततः सवर्णदीर्घे कृते-द्वीतेति पदं निष्पद्यते । अस्यार्थ इत्थमस्ति-जडचेतनात्मकसकलपदार्थानां कारणं ब्रह्मश्रीरामः सर्वत्र व्यापको विराजते, यतो जडचेतनसमस्तपदार्था भगवतः श्रीरामस्य ब्रह्मणः शरीरमस्ति । अयमुभयविधः पदार्थः सर्वत्र वर्तते, यतोभगवतः शरीरमस्ति । विशिष्टं च विशिष्टं चेति विशिष्टे, सूक्ष्मचिदचिद्विशिष्टम् कार्यावस्थापन्नमिति विशिष्टे ब्रह्मणिस्तः, तयोरद्वैतम्-तत्र द्वीतम् भेदोऽस्ति, द्वीतमेव द्वैतम्-द्वीतशब्दात् स्वार्थेऽणि प्रत्यये, अणि णिति आद्यचो 'तद्धितेष्वचामादे' इतिसूत्रेण वृद्धौ द्वैत शब्दो निष्पद्यते, न द्वैतमद्वैतम्-अभेदः, अभेदविशिष्टयोः सूक्ष्मस्थूलचिदचिद्विशिष्टयोर्ब्रह्मणोरभेदः इति विशिष्टाद्वैतम् । प्रलयकाले सूक्ष्मनामरूपविभागानर्होऽपि च सृष्टिकाले नामरूपविभागयोग्यः इति द्वयोः कालयोः समस्तजडचेतनात्मकपदार्थो पृथक् सिद्धसम्बन्धेन कारणब्रह्मश्रीरामे तिष्ठति । तत्र विशिष्टाद्वैतप्रतिपादकानि वाक्यानि तु 'अथातो ब्रह्मजिज्ञासा' जन्माद्यस्य यतः 'स्वाप्ययात्' भेदव्यपदेशाच्चान्यः' भोगमात्रसाम्यलिङ्गाच्च 'जगद्व्यापारवर्जं प्रकरणादसन्निहितत्वाच्च' 'पत्रं पुष्पं फलं तोयं यो मे भक्त्या प्रयच्छति ।' यत् करोषि यदश्नासि' 'भक्त्यामामभिजानाति' सर्वधर्मान् परित्यज्य मामेकं शरणं व्रज' 'यद्यद्विभूतिमत्सत्वं श्रीमदूर्जितमेव वा । तत्तदेवावगच्छ त्वं मम तेजोंऽशसम्भवम् ।' 'द्वा सुपर्णा सयुजासखाय समानं वृक्षे परिसस्वजायते । तयोरन्यः पिप्पलं स्वाद्वत्त्य

**नश्नन्नन्योऽभिचाकसीति ।' यदा पश्यः पश्यते रुक्मवर्णं कर्तारमीशं पुरुषं ब्रह्मयोनिम् । तदा विद्वान् पुण्यपापे विधूय निरञ्जनं परमं साम्यमुपैति ।' 'ज्ञाज्ञौ द्वावजावीशानीशौ । प्रधानक्षेत्रज्ञपतिर्गुणेशः ।' 'य आत्मनि तिष्ठन्नात्मान्तरोय मात्मा न वेद योजगति तिष्ठन् जगदन्तरो यं जगन्न वेद यस्य जगच्छरीरम्' ऐत दात्म्यमिदं सर्वं तत् सत्यं स आत्मा त्वमसि श्वेतकेतो !' इत्याद्यनन्तस्थलेषु गीता ब्रह्मसूत्रोपनिषत्सु विशिष्टाद्वैतं प्रतिपादितमस्ति । एतत्प्रस्थानत्रयस्य यथार्थविवेचना जगद्गुरुश्रीरामानन्दाचार्येण स्वकीयानन्दभाष्येषु कृताऽस्ति । तेषां सर्वेषां तात्पर्यं गुरुमुखाच्छ्रवणीयम् ॥५४॥**

निश्चय करके व्यासदेव निर्मित ब्रह्मसूत्रों में तथा श्रीमद्भगवद्गीता में समस्त उपनिषदों में वर्णन किया गया विशिष्टाद्वैतसिद्धान्त हमारा मत है । सर्वोपनिषदि यहाँ जात्यभिप्राय से एक वचन है । जात्याभिप्राय स्थल में एक वचन से बहुवचन का बोध होता है तार्किकों का यह सिद्धान्त है । श्रीशङ्कराचार्यजी केवल अद्वैत मानते हैं किन्तु हम सब श्रीवैष्णव विशिष्टाद्वैत मानते हैं । अद्वैत उधर है अद्वैत इधर हमारे सिद्धान्त में भी है हाँ हमारे यहाँ केवल अद्वैत नहीं है किन्तु विशिष्टाद्वैत है । विशिष्टाद्वैत की व्याख्या इस तरह से है । द्वाभ्यां चिदचिद्भ्यां इतं सर्वत्र व्याप्तम् । यहां इण् धातु का अर्थ व्यापक माना जाता है यों तो इण् धातु के चार अर्थ हैं ज्ञात, गमन, मोक्ष, प्राप्ति किन्तु-'परोभुवोऽवज्ञाने' इस पा.मु.कृ.सू. में अवज्ञान ग्रहण से धातुओं के प्रसङ्गवश अनेक अर्थ हो जाया करते हैं इसलिए यहाँ व्यापक अर्थ इण् धातु का माना जाता है । 'कर्तृ करणे कृता बहुलम्' इस सूत्र से तृतीया तत्पुरुष समास होता है । यहाँ अन्तोदात्तस्वर होता है समास होने पर तृतीया विभक्ति का तुक् हो जाता है सवर्ण दीर्घ होके द्वीत, यह पद वन जाता है इसका अर्थ इस तरह से है । जड़चेतन समस्त पदार्थों के कारण ब्रह्म श्रीरामजी सब जगह व्यापक हैं क्योंकि जड़चेतन समस्त पदार्थ भगवान् श्रीरामजी के शरीर हैं ये दोनों तरह के पदार्थ सर्वत्र हैं कारण कि भगवान् के शरीर हैं । विशिष्टञ्च विशिष्टञ्च इति विशिष्टे सूक्ष्मचिदचिद विशिष्ट युक्त । और कारणावस्थावाले और स्थूलचिदचिद्विशिष्ट 'युक्त' कार्यावस्था वाले । द्वीत माने भेद द्वीत शब्द से तद्धित प्रकरण में स्वार्थ में अण् प्रत्यय होके 'द्वैत बनता है द्वैत माने भेद नद्वैतम् इति अद्वैतम् । अभेद विशिष्टयोः सूक्ष्मचिदचिद्



विशिष्टब्रह्मणोः स्थूलचिदचिद्विशिष्टब्रह्मणः अभेदम् इति विशिष्टाद्वैतम् । प्रलयकाल में सूक्ष्मनामरूप विभागानर्ह और सृष्टिकाल में नामस्वरूप विभाग दोनों कालों में समस्त जड़चेतनात्मक पदार्थ अपृथक् सिद्ध सम्बन्ध से कारण ब्रह्म श्रीरामजी में रहते हैं । अथातो ब्रह्म जिज्ञासा, जन्माद्यस्य यतः । स्वाप्ययात् । भेदव्यपदेशाच्चान्यः, भोग मात्र साम्यतिङ्गाच्च, जगद्व्यापारवर्जम् प्रकरणादसंन्निहितत्वाच्च, पत्रं पुष्पं फलं तोयं यो मे भक्त्या प्रयच्छति । यत् करोषि यदश्नासि । भक्त्यामामभि जानाति । सर्वधर्मान् परित्यज्य मामेकं शरणं व्रज । यद् यद् विभूतिमत्सत्त्वं श्रीमदूर्जितमेववा तत्तदेवाव गच्छत्वं मम तेजोंऽशसम्भवम् । द्वासुपर्णासयुजासखाया समानं वृक्षं परिसस्वजाते तयो रन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्योऽभिचाकसीति । यदा पश्यः पश्यतेरुक्मवर्णं कर्तारमीशं पुरुषं ब्रह्मयोनितदाविद्वान् पुण्यपापेविधूयनिरञ्जनः परमं साम्यमुपैतिः, ज्ञाज्ञौद्वावजा वीशानीशौ । प्रधानक्षेत्रज्ञपतिर्गुणेशः । य आत्मनितिष्ठन्नात्मान्तरो यमात्मानवेद । यो जगति तिष्ठन् जगदन्तरो यं जगन्नवेद, यस्य जगच्छरीरम्, ऐतदात्म्यमिदं सर्वं तत्सत्यं स आत्मातत्वमसिश्वेतकेतो । इत्यादि अनन्त स्थलों में गीता ब्रह्मसूत्र उपनिषदों में विशिष्टाद्वैत प्रतिपादित है । इन प्रस्थानत्रय का यथार्थ विवेचन जगद्गुरु श्रीरामानन्दाचार्यजी ने अपने आनन्दभाष्यों में किया है । उन सबों का तात्पर्य श्रीगुरु मुख से सुनना चाहिये ॥५४॥

**उपास्यो वर्तते रामो हेयगुणप्रहीणकः ।**
**राम एव परंब्रह्मेति मन्ये कथितः प्रभुः ॥५५॥**

**हेयैः-त्यक्तुं योग्यैः निर्दयता-पक्षपातत्वादिभिर्गुणैः प्रकर्षेण रहितः श्रीरामः, उपास्य आराध्यः वर्तते-विद्यते । श्रीराम एव परंब्रह्म-'भृगुर्वै वारुणिर्वरुणं पितरमुपससार, अधी हि भगवन् ! ब्रह्मेति, सोऽब्रवीत्-'राम एव परंब्रह्म रामादन्यन्न किञ्चन । यत एते रामादेवोपपद्यन्ते, रामादेव स्थितिर्वदति राम एव विलीयन्ते, तस्माद् 'राम एव परंब्रह्म सर्वकारणात् परो विभुः । इत्यस्यां सामवेदस्य तैत्तिरीयशाखायां वर्णितः 'राम एव परं ब्रह्म राम एव परं तपः । राम एव परं तत्त्वं श्रीरामो ब्रह्मतारकम्' इत्यादिरूपेण श्रीरामोपनिषदि निरूपितः सर्वेश्वरः सर्वशक्तिमान् श्रीरामोऽस्माकमुपासनीयोऽस्ति, वयं श्रीरामानन्दीयाः श्रीवैष्णवाः श्रीराममुपास्महे अस्मादेव स्वां गतिं मुक्तिं च कामयामहे, तदन्यदे**

वतातो नैव किमपि वाञ्छामः । प्रभोः श्रीरामान्महान् कोऽपि नास्ति, अयमचलः सिद्धान्तोऽस्ति ।

श्रीरामानन्दीयवैष्णवान् यदि कश्चित् पृच्छेत्-यत् श्रीरामात् महान् शङ्करो नाभविष्यत् तदा श्रीरामः शिवलिङ्गं स्थापयित्वा शिवं कुतोऽस्तौषीत् ? स्तुतिस्तु स्वस्मान्महत एव क्रियते ? इति श्रीरामः श्रीशिवं नास्तोष्यत् ।

अस्य प्रश्नस्योत्तरम्-

श्रीरामचन्द्रचरितगायकाः वेदाः सन्ति । तत्र क्वचिदपि अस्यचर्चा वा सङ्केतो नास्ति । महर्षिश्रीबोधायनपुरुषोत्तमाचार्यैः 'वेदरहस्यं'-नाम्ना श्रीराम-तत्त्वपरकानेकश्रुतिसंग्रहो व्यधायि । यत्र भगवतः पूर्णचरितमस्ति । परमस्य विषयस्य लेशोऽपि नास्ति चर्चा ( वेदोपबृंहणार्थाय तावग्राहयतः प्रभुः ) इत्येतदनुसारवेदोपबृंहणरूपं श्रीवाल्मीकिमुनिकृतश्रीमद्रामायणस्य प्रथमसर्गो मूल रामायणं कथ्यते । प्रथमसर्गो नारदवाल्मीकिसंवादात्मको वर्तते । श्रीनारदं श्री वाल्मीकिरपप्रच्छ 'कोऽन्वस्मिन् साम्प्रतं लोके गुणवान्' इत्यादि, श्रीवाल्मीकिं प्रति श्रीनारदमुनिः शतमितश्लोकैरुपदिदेश । तस्मिन् श्रीमद्रामायणे । शिवलिङ्ग स्थापनाचर्चाऽपि नारदेन नाकारि । समुद्रोल्लङ्घनार्थं सेनायै मार्गं दातुं कथित-मस्ति । सरलरीत्या कथिते किमप्युत्तरं सिन्धुना नादायि, तदा श्रीरामेण रा जनीतिर्दर्शिता, यत् यो यादृशो भवेत् तेन सह तथैव वर्तितव्यम्, श्रीरामो यदा किञ्चिद् रुष्टोबभूब तदा समुद्र आगत्य श्रीरामं प्रार्थयामास । 'समुद्रवचनाच्चैव नलं सेतुमकारयत्' इयमेव तत्रत्या पंक्तिरस्ति । समुद्रवचनाच्छ्रीरामो नलनामक कपिना सिन्धौ सेतुं कारयित्वा लङ्कां जगाम । अत्रशिवलिङ्गस्थापनाया आवश्य कतैव काऽस्ति । अतो मूलरामायणे शिवलिङ्गस्थापनाचर्चा नास्ति । अतः शिव लिङ्गस्थापनाचर्चाऽनर्गलाऽस्ति । मूलरामायणमर्थात् सर्वकथासारवर्णना, सर्व कथासूचीति यावत् । यदि शिवलिङ्गस्थापना पूजनादिश्रीरामकृतमभविष्यत्, तदाऽस्यापि किञ्चिच्चर्चा तत्र कर्तव्याऽभविष्यत्, न कृता । किञ्चान्यत्रापि श्री मद्रामायणे नास्त्येषाचर्चा । अतोऽयं निश्चयोऽस्ति, यच्छिवलिङ्गस्थापना श्रीराम कृता नास्ति । एको रामनामा दक्षिणदेशे कस्मिंश्चिद् प्रदेशे राजा बभूव । तेनात्र सेतुबन्धस्थाने शिवलिङ्गस्थापना कारिताऽस्ति । एतादृश्यैतिहासिकानां मान्यता



वर्तते, कथापीयमेव समीचीनाऽस्ति ।

स्थिता कथा श्रीतुलसीदासस्य तथाऽध्यात्मरामायणस्य, अध्यात्मरामायण-योगवाशिष्ठनामकग्रन्थयोरनयोर्द्वयोर्मान्यता विशिष्टाद्वैतवादिश्रीवैष्णवेषु नास्ति । मानस इदं स्थलम् तथा पार्वत्याः पूजा स्तुती आशीर्वादश्च श्रीसीतायै, इमे द्वे स्थले श्रीतुलसीदासेन कृते न वर्तते । नोचेदुत्तरकाण्डस्य काकभुशुण्डि संवादेऽपि एतत्कथाद्वयेन भवितव्यम्, नास्ति अत इमे द्वे स्थले प्रक्षिप्ते स्तः । योधपुरस्थश्रीनीजामाभिधस्य मन्दिरे बहुपुरातनतुलसीकृतरामायणे द्वे प्रकरणे न स्तः । किमेते द्वे कश्चिदपि विशिष्टाद्वैतवादी पण्डितप्रकाण्डः स्वीकुर्यात् ? कदापि न । 'तातस्य कूपोऽयमिति ब्रुवाणाः क्षारं जलं कापुरुषाः पिबन्ति' इत्याभाणकमद्यास्मदीयश्रीरामानन्दीयश्रीवैष्णवमान्यमजनि । तथ्यातथ्यविचारो नास्ति । इमे द्वे स्थले जगद्गुरुश्रीरामानन्दाचार्यस्यानुयायिनां कृते हेया एवेति शम् ।५५।

छोडने के योग्य निर्दयता पक्षपातत्व आदि गुणों से रहित-भृगुर्वैवारुणिर्वरुणं पितरमुपससार अधीहि भगवन् ब्रह्मेति सोऽब्रवीत् राम एव परंब्रह्मरामादन्यत्र किञ्चन यत एते रामादेवोत्पद्यन्ते रामादेव स्थितिर्वदति रामे एव लीयन्ते तस्माद्राम एव परंब्रह्म सर्वकारणात् परोविभुः ॥ इस सामवेद के तैत्तिरीय शाखा में वर्णन किए गए सर्वशक्तिमान् श्रीरामजी हमारे उपासना के योग्य हैं । श्रीरामजी की उपासना हमसब श्रीरामानन्दीय श्रीवैष्णव करते हैं । इनसे ही अपनी गति मुक्ति चाहते हैं । अन्य देवी देवताओं से कुछ चाहते नहीं हैं । प्रभु श्रीरामजी से बडा कोई नहीं है यह अटल सिद्धान्त है । श्रीरामानन्दीय श्रीवैष्णवों को यदि कोई प्रश्न करे कि श्रीरामजी से बडे यदि शङ्करजी न होते तो श्रीरामजी शिवलिङ्ग की स्थापना करके शिवजी की स्तुति क्यों किए ? स्तुति तो अपने से बडे की ही की जाती है ।

श्रीरामचन्द्रजी के चरित को गानेवाले वेद हैं उनमें कहीं भी इसकी चर्चा या सङ्केत नहीं है महर्षि श्रीबोधायन पुरुषोत्तमाचार्यजी ने 'वेदरहस्यम्' नाम से श्रीराम परक अनेक श्रुति का संग्रह किया है जिसमें भगवान् का पूरा चरित है पर इस विषय का कहीं गन्ध भी नहीं है (वेदोपबृंहणार्थायतावग्राहयतः प्रभुः) के अनुसार वेदोपबृंहणरूप श्रीवाल्मीकि मुनि कृत श्रीमद्रामायण के प्रथम सर्ग को मूलरामायण कहा जाता है । वह प्रथम सर्ग नारद वाल्मीकि सम्वादात्मक है श्रीनारदजी से श्रीवाल्मीकिजी

पूछे श्रीनारदजी १०० श्लोकों से श्रीवाल्मीकिजी को उपदेश दिए। उस मूलरामायण में शिवलिङ्ग स्थापना की चर्चा तक श्रीनारदजी ने नहीं की है। समुद्रोल्लङ्घन के लिए सेना को रास्ता देने को कहा गया, जब सीधे रीत से कहने पर कुछ उत्तर न दिया तब श्रीरामजी राजनीति दर्शाए कि-जो जैसा होवे उसके साथ वैसा ही वर्तना चाहिए। श्रीरामजी जब कुछ रुष्ट हो गए तब समुद्र आ करके श्रीरामजी की प्रार्थना किया-समुद्रवचनाच्चैवनलं सेतुमकारयत्' यही वहाँ की पंक्ति है। समुद्र के कहने से श्रीरामजी नल नामक बानर से समुद्र में पुल बनवा के लङ्का में गए। यहाँ शिव लिङ्ग की स्थापना की आवश्यकता ही क्या है? इसलिए मूलरामायण में शिवलिङ्ग की स्थापना की चर्चा नहीं है न अन्यत्र ही श्रीमद्रामायण में शिवलिङ्ग स्थापन की चर्चा है। अत: शिवलिङ्ग स्थापना की चर्चा अनर्गल है।

मूलरामायण माने सभी कथाओं का सार वर्णन करना अर्थात् कथा सूची यदि शिवलिङ्ग स्थापन पूजन आदि श्रीरामजी कृत होता तो इसकी भी कुछ चर्चा वहाँ करनी आवश्यक थी, नहीं की गई है। इसलिए यह निश्चय है कि शिवलिङ्ग स्थापन श्रीरामजी कृत नहीं है। एक राम नामक दक्षिण देश में अथवा किसी देश में राजा हुआ है उसने वहाँ सेतुबन्धन स्थल में शिवलिङ्ग स्थापन करवाया है। ऐसी ऐतिहासिकों की मान्यता है बात भी यही ठीक है।

रही बात श्रीतुलसीदासजी की तथा अध्यात्म रामायण की तो अध्यात्म रामायण तथा योगवाशिष्ठ नामक ग्रन्थ ये दोनों की मान्यता विशिष्टाद्वैतवादी श्रीवैष्णवों में नहीं है। मानस में यह स्थल तथा पार्वती की पूजा स्तुति आशीर्वाद श्रीसीताजी के लिए ये दोनों स्थल श्रीतुलसीदासजी के बनाए नहीं हैं नहीं तो उत्तरकाण्ड के गरुड-काकभुशुण्डिजी के सम्वाद में भी ये दोनों बातें होनी चाहिए नहीं हैं इसलिए ये दोनों स्थल प्रक्षिप्त हैं। योधपुरस्थ श्रीनीजामाजी के मन्दिर में बहुत पुरानी श्रीतुलसी कृत श्रीरामायण है उसमें दोनों प्रकरण नहीं हैं! क्या कोई विशिष्टाद्वैतवादी प्रकृष्ट पण्डित इन दोनों को स्वीकृत करेगा? कदापि नहीं। तातस्य कूपोऽयमिति ब्रुबाणा: क्षारं जलं का पुरुषा: पिबन्ति। यही कहावत आज हमारे श्रीरामानन्दीय श्रीवैष्णवों में मान्य हो गई है। तथ्यातथ्य का विचार नहीं है। इन दोनों स्थलों को जगद्गुरु श्रीरामानन्दाचार्य स्वामी श्रीरघुवराचार्यजी स्वीकार नहीं करते थे। मैंने



एकान्त में पूछा था तो जवाब मिला की ये दोनों स्थल अमान्य हैं। पण्डित दार्शनिक सार्वभौम श्रीवासुदेवाचार्यजी भी ये दोनों स्थल प्रक्षिप्त हैं ऐसा कहते थे॥५५॥

**दाक्षिण्यादिगुणैर्युक्त: सर्वज्ञो व्यापको हरि:।**
**सत्यसाकेतधामस्थो नित्यमूर्तिसमाश्रित:॥५६॥**
**अन्तर्यामी प्रभू रामो धर्माधर्मप्रशासक:।**
**धर्मोऽधर्मोजडत्वात्स्वं फलं दातुं न शुक्नुयात्॥५७॥**
**धर्मादिफललब्धारो दृश्यन्ते बहवो जना:।**
**अतस्तत्प्रेरको रामो मन्तव्योऽस्ति विचक्षणै:॥५८॥**

दाक्षिण्यम्-चतुरता, तत्प्रभृतिभि:-दयागाम्भीर्यशौर्यादिभि: गुणै: युक्त: सम्पन्न: अर्थात् केन जीवेन कीदृशं कर्माचरितमस्ति तदनुसारमेव तस्यामुकयोनौ प्रेषणम्, तत्रापि तदीयकर्मानुसारमेव सुखदु:खलाभहान्यादिदापना, एतादृशगुणैरन्वित:। सर्वज्ञ:-भूतवर्तमानभविष्यवित्, व्यापक:-देशवस्तुकालकृतभेदरहित अमुकदेशेऽस्ति, अमुकदेशे नास्ति, अमुकवस्तुजानीतेऽमुकवस्तु न वेद, अमुक कालेऽस्ति अमुककाले नास्ति, एतद्भेदरहितोऽस्ति, सकलदेशवस्तुकालेषु वर्तते, इयमेवव्यापकताऽस्ति। हरिरस्ति, स्वशरणागतसद्भक्तानां सर्वकर्मनाशको विद्यते, सञ्चितप्रारब्धक्रियमाणानीमान्येव त्रीणि कर्माणि सन्ति, एषां हारक:। सत्य 'नित्य' साकेतधामवास्तव्यो मुख्यतया विराजते। यथा राजा स्वराज्ये स्वविश्रामार्थं बहूनि स्थलानि विधापयति, किन्तु मुख्यतया स्वनगरे मुख्य एवैकस्मिन् स्थाने निवसति। तथैव प्रभो: सर्वमेवं जगन्निवासस्थानमस्ति, किन्तु मुख्यमेकं साकेतधामैव विश्रामार्थमस्ति। कर्माधीनरहितशरीरवान्, जीवकृतधर्माधर्मयो: प्रकर्षेण शासनकारक:।

धर्मस्तथाऽधर्मोजडोऽस्ति। अतो धर्माधर्मौ स्वफलं दातुमसमर्थौस्त:। यतो दानाऽऽदाने चेतनस्य धर्मौस्त:। जडो दानाऽऽदाने कर्तुं नार्हति। धर्मस्य फलं सुखं तथा लाभ:। अधर्मस्य फलं दु:खं तथा हानि:। अनयो: प्राप्तारोऽनेकेप्राणिनो दृश्यन्ते। अतोधर्माधर्मप्रेरकोऽन्तर्यामी सर्वप्राणिनां सर्वावस्थासु कृतशुभाशुभकर्मज्ञाताऽयंजीव: पूर्वजन्मनि अथवाऽस्मिन्नेवजन्मनि शुभमशुभं वाऽकृत, कर्म वा कुरुते तदाऽस्य कर्मण: फलं तत्तत्प्राणिभ्यस्तत्तद्देशे तथा

विभागाभाव होता है। यह विचार प्रथम में हो गया है। सूक्ष्मचिदचिद्विशिष्ट ब्रह्म जगत् के प्रति उपादान कारण है। 'एकोऽहं बहुस्याम' इत्यादि सङ्कल्प विशिष्ट ब्रह्म सहकारी कारण है। शक्ति ज्ञान वीर्य बल तेज तथा ऐश्वर्य विशिष्ट परब्रह्म श्रीरामजी निमित्त कारण है ॥८६॥

**निराकारमिति श्रुत्यर्थोऽयं ब्रह्म नु वर्तते ।**
**कर्मानायत्तसन्मूर्ति प्रतिभा शक्तितंसितम् ॥८७॥**

पूर्वपक्षी मायावादी वदति यद् हे विशिष्टाद्वैतवादिनः ! भवन्तो ब्रुवन्ति यज्जडचेतनात्मकशरीरवद् ब्रह्मैवास्य जडचेतनात्मकजगत उपादानकारणमस्ति, तन्न भविदुमर्हति, यतः श्रुतिषु ब्रह्म निराकारमुक्तमस्ति, विशिष्टाद्वैत वादिन आहुर्यदरे मायावादिनः ! ब्रह्म निराकारं न भवितुमर्हति, इतः प्राग्-अकायम् इत्येतस्य व्याख्यायां ब्रह्म शरीरशालिसाधितमस्ति । सहस्त्रशीर्षा पुरुषः सहस्त्राक्षः सहस्त्रपात् । इति मन्त्रेण तु ब्रह्मानन्तशिरस्कमनन्तनेत्रादिकं ज्ञानेन्द्रियवदनन्तचरणादिकं कर्मेन्द्रियवत् सिध्यति । यदि ब्रह्मशरीररहितमभविष्यत्तदा कथयतु अनन्तशिरोनेत्रपादादीनां ब्रह्मणः कथनं कथं सङ्गतमभविष्यत् । शरीरं विनैतेषां सम्भव एव नासीत्तर्हि वेदे कथमनन्तशिरः प्रभृतीनां वर्णनं कृतमस्ति ? । तदा पुनर्मायावादी वदति यद् वेदे लिखितमस्ति-अपाणिपादो जवनो ग्रहीता इत्यादिना हस्तपादादीनामभावस्य वर्णनमस्ति, स तु शरीराभाव एवोक्तोऽस्ति । उत्तरम्-अरे भ्रातरः किञ्चित् कमपि गुरुमुपेत्य बुध्यध्वम् हस्तौ नस्तः पुनर्गृह्णाति चरणौ न स्तः पुनरपि चलति अस्य भावं कमबुद्ध्वम् ? भवन्तः सहस्त्राक्षः सहस्त्रपात्, सहस्त्रशीर्षा अस्य भावं कमज्ञासिषु ? एकस्यां श्रुतावनन्तपाणिपादादिकानि भवेयुरपरस्यां च श्रुतौ तदभाव उच्येतेति कथं सङ्गतं भवितुमर्हेत् । महाशय ! श्रूयताम् यत्रानन्तशिरः प्रभृतीनां वर्णनमस्ति, सम्यगेवैतत् तेन ब्रह्मशरीरशालि सिध्यत्येव । यत्र हस्तपाद्यभाववर्णनमस्ति, तत् किञ्चिद् बुध्यस्व पदाभाववर्णनमस्ति चलनवर्णनं चास्ति । तत्र चलधातोरर्थोऽस्ति गतिः, सा च पृष्ठात् पदमुत्थाप्याग्रे तत्स्थापना, इत्येषा सर्वथा शरीराभावे कथं भवितुमर्हति ? इदं तु ईदृशमभूत् कश्चिद् वदति-मम माता नास्ति, तदाऽपरो वदति मातुरभावे तव जनिः कथं जाता ? कश्चिद् वदति-मम पिता



विवाहं न कृतवान् वर्तते जीवने कदापि स्त्रीसङ्गमं न कृतवानस्ति, तदाऽपरो ब्रूते, यदि भवतः कथनं सत्यमस्ति, तर्हि भवत उत्पत्तिः कथमभूत् ?, अत्रोत्तरं किमपि नास्ति, तथैव पदाद्यभावोऽस्ति, किन्तु पदादिकार्यं भवति, एतदपि नितरामसङ्गतमस्ति । अपाणिपादो जवनो ग्रहीता अस्यभावोऽयमस्ति-यत् जीवानां सकलेन्द्रियाणां तत्तद्देवता अधिष्ठात्र्यः सन्ति ता निःसरेयुश्चेत्तदा जीवानां तत्तदिन्द्रियाणि व्यर्थान्येव भवेयुः स्वस्वकार्यं कर्तुं न शक्नुयुः । ब्रह्मणः सर्वाणीन्द्रियाणि दिव्याणि स्वतन्त्राणि च सन्ति । तेषां तत्तद्देवता अधिष्ठात्र्यो न सन्ति । जीवानां कर्मेन्द्रियाणामधिष्ठातरि दिक्पालाः सन्ति वटुकभैरवादयो वर्तन्ते । हस्तस्येन्द्रोऽस्ति, नेत्रयोः सूर्यो विद्यते, नासिकाया अश्विनीकुमारौस्तः, रसनेन्द्रियस्य वरुणो वर्तते, वागिन्द्रियस्य वह्निरस्ति, त्वगिन्द्रियस्य वायुरस्ति, शिश्नेन्द्रियस्य प्रजापतिरस्ति, गुह्येन्द्रियस्य यमोऽस्ति, पादेन्द्रियस्य विष्णुः स्वामी वर्तते, मनसश्चन्द्रमाः स्वामी विद्यते । ब्रह्मण इन्द्रियाणिं स्वतन्त्राणि सन्ति । अयमर्थोऽस्ति । अपाणिपादो जवनो ग्रहीता इत्यादेः । पुनर्मायावादी कथयति यत् तर्हि निराकारं ब्रह्मेत्यस्य को भावोऽस्ति ?, उत्तरम्-सर्वथाऽऽकाराभावे तु बहुब्रीहिसमासः कथं भवितुमर्हेत् ? इयं वार्ता पुराणी वर्तते । निराकारमिति श्रुतेरर्थोऽयमस्ति यत् कर्माधीनानित्यभिन्नकर्मानधीननित्यशरीरवद् ब्रह्मास्ति तथा प्रतिभाशक्तियुक्तं वर्तते । विशिष्टाद्वैतवादीब्रुते सर्वथाऽऽकारशरीराभ्यां रहितं ब्रह्म वर्तत एवं वक्तुं न शक्यके, यथा ख पुष्पं नास्ति, शशशृङ्गं नास्ति, तदाऽनयोर्निषेधोऽपि न भवति । यतो वस्तु सर्वथा नास्ति अप्रसिद्धमस्ति, तदा तद्वस्तुनिषेधोऽपि न भवति, कारणमिदं यद् यस्याभावस्य प्रतियोग्यप्रसिद्धोऽस्ति सोऽभावोनाङ्गीक्रियते, यथाऽऽकाशपुष्पस्याभावो न मन्यते, यत आकाशपुष्पमेवाप्रसिद्धमस्ति, इदमेव स्पष्टीक्रियतेऽग्रिमश्लोकेन ॥८७॥

पूर्वपक्ष मायावादी कहता है कि-हे विशिष्टाद्वैतवादियो आप लोग कहते हैं कि जड़चेतनात्मक शरीरवाला ब्रह्म ही इस दृश्यमान जड़चेतनात्मक जगत् का उपादान कारण है सो बन नहीं सकता है कारण कि श्रुतियों में ब्रह्म को निराकार शरीर रहित कहा जाता है-विशिष्टाद्वैतवादी कहते हैं कि-अरे मायावादियो ब्रह्म निराकार शरीर रहित हो ही नहीं सकता है। इसके प्रथम-अकायम् इसकी व्याख्या से ब्रह्म को शरीर

वाला सिद्ध किया गया है। सहस्रशीर्षापुरुष: सहस्राक्ष: सहस्रपात्। इस मन्त्र से तो ब्रह्म अनन्तशरीरवाला अनन्त नेत्र आदि ज्ञानेन्द्रियवाला अनन्त पग आदि कर्मेन्द्रिय वाला सिद्ध होता है। यदि ब्रह्म शरीर रहित होता तो कहिए अनन्त शिर अनन्त नेत्र अनन्त पग आदि का वर्णन कैसे संगत हो सकेगा शरीर के विना इनकी सम्भावना ही नहीं थी तो वेद में क्यों अनन्त शिर आदि का वर्णन किया है? तब फिर मायावादी कहता है कि-वेद में तो लिखा है कि-'अपाणिपादोज़बनोग्रहीता' इत्यादि से तो हाथ पग आदि का अभाव वर्णन है सो तो शरीराभाव ही कहा है। उत्तर-अरे भाइयो जरा किसी गुरुजी के पास जा के समझो तो हाथ नहीं है फिर भी लेता है पग नहीं है फिर भी चलता है इसका भाव क्या समझे आप सहस्राक्ष: सहस्रपात् सहस्रशीर्षा इनका भाव क्या समझे हो एक श्रुति में अनन्त हाथ पग आदिक हो जायँ एक श्रुति में उनका अभाव कहा जाय यह कैसे संगत हो सके महाशयजी सुन लीजिए जहां अनन्त शीर आदि का वर्णन है यह ठीक ही है उससे ब्रह्म शरीरवाला सिद्ध ही हो रहा है। जहां हाथ पग आदि का अभाव वर्णन है। जरा समझो पग का अभाव वर्णन है और चलना वर्णन है। चलगतौ धातु का अर्थ है कि पीछे से पग को उठा के आगे रखना यह सर्वथा शरीर के अभाव में कैसे हो सकता है। यह तो ऐसा हो गया 'कश्चिद्वदति मम माता नास्ति तदा अपरो वदति मातुरभावे तव जनि: कथं जाता' कोई कहता है कि मेरे पिता ने विवाह नहीं किया है जीवन में कभी भी स्त्री का संगम नहीं किया है तब दूसरा बोलता है यदि आप का कथन सत्य है तो आपकी उत्पत्ति कैसे हुई है? यहां उत्तर कुछ भी नहीं है वैसे ही पग आदि का अभाव है किन्तु पग आदि का कार्य होता है यह भी विलकुल असंगत है। अपाणिपादो जवनोग्रहीता इसका भाव यह है कि जीवों की सभी इन्द्रियों का तत् तत् देवता मालिक हैं वे हट जायें तो जीवों की वे वे इन्द्रियाँ बेकार हो जायँ अपना अपना कर्म न कर सकें। ब्रह्म की समस्त इन्द्रियाँ दिव्य तथा स्वतन्त्र हैं उनका तत् तत् देवता मालिक नहीं हैं। जीवों की इन्द्रियों के कर्ण इन्द्रिय का मालिक दिग्पाल है वटुक भैरवादि हैं। हाथ का इन्द्रि है। नेत्रों के सूर्य हैं। नाक का अश्विनीकुमार है रसना इन्द्रिय का वरुण है वाक् इन्द्रिय का अग्नि हैं। त्वक् इन्द्रिय का पवन है। मूत्रेन्द्रिय का प्रजापति है। गुदा इन्द्रिय का यम है। पग इन्द्रिय का विष्णु मालिक है मन का चन्द्रमा मालिक



है। ब्रह्म की इन्द्रियां स्वतन्त्र है। यह अर्थ है 'अपाणिपादो जवनो ग्रहीता' इत्यादि का। फिर मायावादी कहता है कि- तो निराकार ब्रह्म इसका क्या भाव है? उत्तर सर्वथा आकर के अभाव होने पर तो बहुब्रीहिसमास कैसे हो सकेगा यह बात जूनी है। निराकार इस श्रुति का अर्थ यह है कि कर्माधीन तथा अनित्य इनसे रहित नित्य तथा कर्मानधीन शरीरवाला ब्रह्म है तथा प्रतिभा शक्ति से युक्त है। विशिष्टाद्वैतवादी कहते हैं कि सर्वथा आकार शरीर रहित ब्रह्म है ऐसा नहीं कहा जा सकता है जैसे पुष्प नहीं है शशश्रृङ्ग नहीं है तो इनका निषेध भी नहीं होता है कारण कि वस्तु सर्वथा नहीं है अप्रसिद्ध है तो उस वस्तु का निषेध भी नहीं होता है कारण यह कि जिस अभाव का प्रतियोगी अप्रसिद्ध है वह अभाव नहीं स्वीकार किया जाता है जैसे आकाश पुष्प का अभाव नहीं माना जाता है क्योंकि आकाश पुष्प ही अप्रसिद्ध है। इसी बात को स्पष्ट किया जाता है आगे के श्लोक से ॥८७॥

**घटाभावे कथं तस्याभावं शक्ता: प्रवल्गितुम्।**
**भवादृशा भविष्यन्ति युक्ति: काऽत्र विचार्यताम् ॥८८॥**

अथ पुनरपि द्विर्बद्धं सुबद्धं भवतीति न्यायेन केनाप्येकोऽश्व: पालित आसीत्, तदा सायं सोऽश्वस्तेन बद्धोऽपि प्रातर्बन्धनरज्जुं त्रोटयित्वा कस्यापि क्षेत्रे विघातं कुर्वन्नासीत्, तदाऽश्वपतेरुपालभ्भो मिलन्नासीत्, अतोदृढरज्ज्वा ऽश्वोद्विर्बद्ध: स्तदासुबद्ध: क्षेत्रविधातं कर्तुं नाशकत्। तथैव यस्य समाधानं द्विस्त्रि: क्रियते तत्समाधानं सुसमीचीनं भवति। तत् खण्डयितुं कोऽपि न शक्नोति। यदि जगति सर्वथा घटपदार्थो नास्ति तदा तस्याभावं वक्तुं भवान् यथा समर्थो न भवति। यदि कथयेत्-नैव तदा नैव चारु, तदाऽपि तदभाव: क्व गन्तुमर्हेत्? इति कथनं वितथमस्ति। अत्र का युक्तिरस्ति?, कथ्यतां त, काऽपि युक्तिर्नास्ति, यस्याभावस्य प्रतियोग्यप्रसिद्धोऽस्ति, सोऽभावं एव न स्वीक्रियते, यथाऽऽकाशपुष्पाभावस्य प्रतियोग्याकाशपुष्पमस्ति। किन्तु आकाशपुष्पमेवाप्रसिद्धमस्ति, अत आकाशपुष्पाभावो न वक्तुं शक्यते। एवमेव भवदीयमतेन ब्रह्मण: शरीरस्याभावोऽस्ति चेत्तदाऽस्य ब्रह्मण: शरीरस्याभावस्य प्रतियोगिब्रह्मणो नित्यं कर्माधीनभिन्नं च दिव्यं शरीरं सिद्धमभूत्। अकायमित्यस्य व्याख्यया तथा सहस्त्रशीर्षा पुरु: इत्यस्य व्याख्यया च ब्रह्म

**साऽऽकारं सिद्धमभूत् । अनेक साधनैस्तदेव स्पष्टीक्रियते ॥८८॥**

अब फिर भी, द्विर्बद्धं सुबद्धं भवति । इस न्याय से किसी ने एक अश्व पाला था तो साम को उस अश्व को बाँध देता तो सबेरे तक में वह बन्धन रस्सी को तोड़ के किसी के खेत में नुकशान करता तो अश्ववाले को ठपका मिलता इसलिए दो बार खूब मजबूत रस्सी से बाँधा तो मजबूत बन्धा रहा नुकसान न कर सका उसी तरह से जिसका समाधान दो तीन तरह से किया जाता है वह समाधान ठीक ठीक होता है उसको जल्दी से कोई काट सकता नहीं है। यदि जगत् में सर्वथा घट पदार्थ नहीं है तो उसका अभाव कहने के लिए आप जैसे समर्थ नहीं हो सकते हैं। यदि कहें कि नहीं तीन हीं सही तो भी उसका अभाव कहा जा सकता है यह कथन गलत है इसमें क्या युक्ति है कहिए तो कोई युक्ति नहीं है जिस अभाव का प्रतियोगी अप्रसिद्ध है वह अभाव ही नहीं माना जाता है। जैसे आकाश पुष्प के अभाव का प्रतियोगी आकाश पुष्प है किन्तु आकाश पुष्प ही अप्रसिद्ध है इसलिए आकाश पुष्प का अभाव नहीं कहा जा सकता है । इसी तरह से आपके मनसे ब्रह्म के शरीर का अभाव है तो इस ब्रह्म के शरीर के अभाव का प्रतियोगी ब्रह्म का नित्य तथा कर्माधीन रहित दिव्य शरीर सिद्ध हुआ है। अकायम् । इसकी व्याख्या से तथा सहस्त्र शीर्षापुरुषः । इसकी व्याख्या से अब ब्रह्म साकार सिद्ध हो गया है। अनेक साधनों से सोई स्पष्ट किया जाता है ॥८८॥

**तथैव प्रकृते ज्ञेयमतस्तत् साकृतीष्यताम् ।**
**साऽऽकारं नाशमाप्नोति वस्तु घटादिवत् सदा ॥८९॥**

**यथा घटाभावस्य प्रतियोगी घटोऽस्ति, तदा कुत्रचिद् घटाभावो वक्तुं शक्यते, तथैव भवतः केवलाद्वैतवादिनो मते ब्रह्मणः शरीरस्याभावो मन्यते । किन्तु अकायम् इत्यस्य व्याख्यया तथा सहस्त्रशीर्षा पुरुष इत्यस्य च व्याख्यया ब्रह्मणो नित्यं कर्माधीनभिन्नं दिव्यं शरीरं सिध्यति । केवलमद्वैतवादिमते ब्रह्मणः शरीराभावः स्वीक्रियते । अस्याभावस्य प्रतियोगि वर्तते नित्यदिव्यकर्मानधीनं ब्रह्मशरीरम् । इदं प्रसिद्धमस्ति। अतो ब्रह्म साकारं स्वीकर्तुमुचितम् अथ पुनरपि केवलाद्वैतवादी पृच्छति यद् घटादिवत्साकारः पदार्थः (मूर्तिमान्) नश्यति सदाऽयं नियमोऽस्ति, तदा ब्रह्मापि भवन्तः साकारं स्वीकुर्वन्ति, तदा घटादिवद् ब्रह्मापि नश्वरं स्यात् । एवमनित्यघटादिवत् ब्रह्म नाशवन्न स्वीकर्तुं युज्यते ॥८९॥**



जैसे घटाभाव का प्रतियोगी घट है तो कहीं पर घटाभाव कहा जा सकता है। वैसे ही आप केवल अद्वैतवादी के मत में ब्रह्म के शरीर का अभाव माना जाता है। किन्तु 'अकायम्' इसकी व्याख्या से तथा 'सहस्त्रशीर्षापुरुषः' इत्यादि की व्याख्या से ब्रह्म का नित्य तथा कर्माधीन रहित दिव्य शरीर सिद्ध होता है । केवल अद्वैतवादी के मत में ब्रह्म के शरीर का अभाव माना जाता है । इस अभाव का प्रतियोगी है नित्य दिव्य तथा कर्माधीन रहित ब्रह्म का शरीर यह प्रसिद्ध है इसलिए ब्रह्म को साकार मानना ठीक है । अब फिर भी केवल अद्वैतवादी प्रश्न करता है कि-घटादि के तरह साकार मूर्तिमान् पदार्थ नाश हो जाता है हमेशा ऐसा नियम है तो ब्रह्म को भी आप विशिष्टाद्वैतवादी साकार मानते हैं वह भी घटादि के तरह नाश हो जाता होगा ऐसे अनित्य घटादि के तरह नाशवाला ब्रह्म को नहीं मानना हीं ठीक है ॥८९॥

**तथैव तदपि स्याद् भो दोषोऽयं वार्यतां त्वया ।**
**श्रृणुताङ्ग ! न तद् ब्रह्माऽनित्याकारघटादिवत् ॥९०॥**

**केवलाद्वैतवादी ब्रुते यदनित्यघटादिर्यथा नश्यति, तथैव साऽऽकारं ब्रह्मापि साऽऽकारो घटादिरिव नश्येत्, एतादृशब्रह्मस्वीकारो व्यर्थोऽस्ति । अत आकाररहितं ब्रह्माङ्गीकरणीयम् । अस्योत्तरम्-विशिष्टाद्वैतवादिनो ददति-यद् हे सखायः ! श्रृणुतैतद् ब्रह्मानित्याकारशालिघटादिरिव न वर्त्तते । अग्रिमश्लोकेनोत्तरं दीयने विशिष्टाद्वैतवादिभिः ॥९०॥**

केवल अद्वैतवादी कहता है कि अनित्य घटादि जैसे नाश हो जाते हैं वैसे ही साकार ब्रह्म भी साकार घटादि के तरह नाश हो जायगा ऐसे ब्रह्म को मानना व्यर्थ है इसलिए आकार रहित ब्रह्म को मानना चाहिए इसका उत्तर विशिष्टाद्वैतवादी देते हैं कि-हे मित्रो ! तुमलोग सुनो वह ब्रह्म अनित्य आकारवाले घटादि के तरह नहीं है आगे के श्लोक से उत्तर दिया जाता है विशिष्टाद्वैतवादी की तरफ से ॥९०॥

**किन्तु नित्याऽऽकृति ब्रह्माकर्तृकं वर्तते कुतः ?।**
**नाशार्हं स्यादनवस्था तस्मिन् सकर्तृकेऽप्रिया ॥९१॥**

**विशिष्टाद्वैतवादिनो वदन्ति यत् तद् ब्रह्म कर्तृरहितं नित्यशरीरशालि वर्तते,**

यतो यदि ब्रह्म सकर्तृकं मन्येत तर्हि सकर्तृकघटादिपदार्थ इव नाशयोग्यं स्यात्, सवर्तृका घटादयः पदार्था नाशार्हाः सन्ति एव ते नश्यन्ति । अत्र नाश शब्दार्थोऽयमस्ति-नामरूपविभागेनादर्शनम् , यतो विशिष्टाद्वैतसिद्धान्ते जडचेत नपदार्थो भगवतः शरीरं स्वीक्रियते, भगवान् नित्योऽस्ति तदा तदीयशरीरभूतो जडचेतनपदार्थसार्थोऽपि नित्य एवास्ति । अथ केचिन्नास्तिकाश्चार्वाकादयो ब्रुबते यद् वयं ब्रह्म न स्वीकुर्मः, वाढं ब्रह्म नाशार्हमस्तु, त्वयं घटादिवत् सकर्तृकं ब्रह्म मन्यामहे, अथ परमास्तिका विशिष्टाद्वैतवादिनो वदन्ति यद् ब्रह्म सकर्तृकं न स्वीकर्तुमर्हन्ति । यतो यदि भवन्तो ब्रह्म सकर्तृकं मन्यन्ते तदा वयं पृच्छामो यद् ब्रह्म कर्तुः कर्ता कोऽस्ति, यदि तदीयकर्तारं निर्देक्ष्यन्ति तदा तत् कर्ता कोऽस्ति ? एवं प्रश्नपरम्पराया यं यं तत्तत्कर्तारं निर्देक्ष्यन्ति तस्य तस्य कर्तृप्रश्न प्रबुद्धावप्रामाणिकानन्तकर्तृकल्पना विश्रान्तिविरहात्मिकाऽनवस्था दोषाय जायेत, एतद्वारणाय भवदीयसविधे किमप्युत्तरं न स्यात् । अतो ब्रह्म प्रमादेनापि सकर्तृकं नाङ्गीकार्यम् ॥९१॥

विशिष्टाद्वैतवादी कहते हैं कि वह ब्रह्म कर्ता रहित नित्य शरीर वाला है क्योंकि यदि ब्रह्म को सकर्तृक मानोगे तो सकर्तृक घटादि पदार्थों की तरह ब्रह्म भी नाश के योग्य हो जायगा । सकर्तृक घटादि पदार्थ नाश के योग्य है ही नाश भी हो जाते हैं यहां नाश शब्द का अर्थ यह है नाम रूप विभाग होके न दिखना कारण कि विशिष्टाद्वैत सिद्धान्त में जड़ चेतन पदार्थ भगवान् के शरीर माने जाते हैं भगवान् नित्य है तो भगवान् के शरीर भूत जड़चेतनात्मक पदार्थ भी नित्य ही है । अब कोई नास्तिक चार्वाकादि कहते हैं कि हमलोग तो ब्रह्म को मानते नहीं हैं भले ही ब्रह्म भी नाश के योग्य हो जावे हमलोग तो घटादि के तरह ब्रह्म को भी सकर्तृक मानेंगे मानते हैं भी अब परम आस्तिक विशिष्टाद्वैतवादी कहते हैं कि ब्रह्म को सकर्तृक नहीं मान सकते हो क्योंकि यदि ब्रह्म को सकर्तृक मानते हैं तो हम विशिष्टाद्वैतवादी कहते हैं यदि ब्रह्म सकर्तृक मानते हो तो ब्रह्म के बनानेवाले को किसने बनाया कोई निर्देश करोगे तो हम कहेंगे कि इसको किसने बनाया है जिसको आप निर्देश करते हैं । इसी तरह से आगे बढते जाओगे तो अनिष्ट अनवस्था दोष हो जायगा इस दोष का वारण करने के लिए आप नास्तिकों के पास कोई उत्तर ही नहीं मिल सकेगा इसलिए



ब्रह्म को भूल से भी सकर्तृक नहीं मानना चाहिए ॥९१॥

**प्रकृतेः शरीरवतां प्रभोर्जगदीश्वरस्य च कीदृशः ?**
**वदताऽयि ? नैकनिवादिनः ! खलु वर्तते भवतां मते ।**
**शुभदेहदेहिकशेषशेषिकभावकः श्रृणु मायिक !**
**इति भो नियम्यनियामकत्वमयं पटो मम बुध्यताम् ॥९२॥**

अथ केवलाद्वैतवादी पृच्छति यद् हे विशिष्टाद्वैतवादिनः ! भवन्तो ब्रुवन्तु यद् भवदीयमते प्रकृति-जीव-ब्रह्मणां शरीरशरीरिभावः शेषशेषिभावश्च कीदृशोऽस्ति ? अस्य प्रश्नस्योत्तरम् विशिष्टाद्वैतवादिनो ददति । हे मायावादिंस्त्वं श्रृणु-प्रश्नस्योत्तरं समाकर्णय शरीरशरीरिभाव एवमस्ति-नियम्यनियामक भावः शरीरशरीरिभावोऽस्ति । नियम्योजडचेतनात्मकपदार्थोऽस्ति नियामकं परब्रह्म वर्तते । स्वेच्छया प्रयोज्यं शरीरम् स्वेच्छया प्रयोजकः शरीरी । इदं शरीरशरीरिणोर्लक्षणमस्ति । यद्वा नियम्यं शरीरम्-जडचेतनात्मकपदार्थजातं भगवतो वपुः नियामकं परब्रह्म । अनयोः शरीरशरीरिभावलक्षणयोरेक एवार्थोऽस्ति । नियम्यं-यस्य जडचेतनात्मकजीवस्य पूर्वजन्मकृतं कर्मास्ति, तस्य कर्मानुसारमेव सुखदुःखलाभालाभदापनेत्येव नियामकस्य कार्यमस्ति । ब्रह्म अस्येच्छया प्रयोज्यमर्थात् पूर्वजन्मकृतशुभाशुभात्मककर्मानुसारं सुखदुःखलाभालाभात्मकफलभोगायामुकामुकयोनिषु प्रवेशाय निदेशकरणमयमेव स्वेच्छया प्रयोज्यशब्दार्थोऽस्ति । संक्षेपतः शेषशेषिभावस्याभिप्रायो बुध्यताम् । यथैको राजाऽस्ति, तस्य सुखसाधनं मनः प्रसादसाधनं चाच्छाच्छवसनं सुगन्धि-कुसुममालाऽच्छाच्छभोज्यं नानाविधं फलं नानाविधं मिष्टान्नं दुग्धं दधिनवनीतं नानाविधं पक्वान्नं भोज्यमेषां स्वेच्छानुसारमुपभोगं कुरुते । एवं यावन्तो जडचेतनात्मकाः पदार्थाः सन्ति, ते सर्वे शेषाः सन्ति, परमात्मा श्रीरामः शेषी विद्यते । सर्वे जडचेतनात्मक-पदार्थाः शेषिणे सन्ति, तदा शेषी परमात्मा परब्रह्म श्रीरामस्तान् स्वशेषभूतपदार्थान् स्वेच्छयोपभुङ्क्ते । अत्र कस्याप्याज्ञा न भवितुमर्हति । कथयतु महाशय ! भवतः शेषशेषिभावस्याभिप्रायो विदितोऽभून्नवा ? अयं सर्वेषामपि व्यासादीनां पूर्वाचार्याणामिष्टोऽस्ति । एषः शरीरशरीरिभावः शेषशेषिभावश्च विशिष्टाद्वैतवादिनाम् । अत्र क्षो

**दक्षेमकरणस्यावसरो नास्ति । यस्य शङ्काभवेत् स कस्माच्चिद् विशिष्टाद्वैतवादि विदुषः सकाशाद् बुध्यतां तत्त्वम् ॥९२॥**

अब केवल अद्वैतवादी प्रश्न करता है कि-हे विशिष्टाद्वैतवादियों आपलोग कहिए कि आप सबके मत में प्रकृति-जीव-ब्रह्म इनका शरीर शरीरीभाव तथा शेष शेषिभाव किस तरह का है । इस प्रश्न का उत्तर विशिष्टाद्वैतवादी देते हैं-हे मायावादी तुम अपने प्रश्न का उत्तर सुनो शरीर शरीरीभाव ऐसा है-नियम्य नियामकभाव शरीर शरीरीभाव है । नियम्य जड़चेतनात्मक पदार्थ है । नियामक परब्रह्म श्रीरामजी हैं स्वेच्छया प्रयोज्यं शरीरम् । स्वेच्छया प्रयोजकः शरीरी । यह शरीर शरीरी का भी लक्षण है। चाहे नियम्यं शरीरम् जड़चेतनात्मकपदार्थसमुदायः भगवतः शरीरम् । नियामकं परब्रह्म । इन दोनों शरीर शरीरीभाव लक्षणों का एक ही अर्थ है नियम्य जिस जड़ चेतनात्मक जीव का पूर्व जन्म कृतकर्म है उसके कर्मानुसार ही सुखदुःख लाभालाभ दिलाना यही नियामक का काम है । ब्रह्म इनकी इच्छया प्रयोज्यमाने पूर्वजन्मकृत शुभाशुभात्मक कर्मानुसार सुखदुःख लाभालाभात्मक फल भोगने के लिए अमुक अमुक योनियों में प्रवेश होने का हुकुम देना यही स्वेच्छया प्रयोजक का अर्थ है। संक्षेप में शेषशेषीभाव का अभिप्राय समझ लीजिए जैसे एक राजा है उसके सुख के साधन मन प्रसन्न के साधन अच्छे अच्छे वस्त्र अत्तर पुष्प माला अच्छे अच्छे तरह तरह के सोने चाँदी के आभूषण अथवा अच्छे अच्छे खाने के योग्य तरह तरह के फल तरह तरह के खाने योग्य मिठाई दूध दही माखन तरह तरह के पकाए भोजन इन सबको अपनी इच्छा के अनुसार उपयोग करता है । उसी तरह से जितने जड़चेतनात्मक पदार्थ हैं। वे सब शेष हैं परब्रह्म श्रीरामजी शेषी हैं । सभी जड़चेतनात्मक पदार्थ शेषी के लिए हैं तो शेषी परमात्मा परब्रह्म श्रीरामजी उन अपने शेष भूत पदार्थों को अपनी इच्छा से अपने उपयोग में लेते हैं । यहां किसी की आज्ञा नहीं हो सकती है । कहिए महाशयजी आपको शेषशेषीभाव का अभिप्राय विदित हुआ है कि नहीं ? यह सभी व्यासादि पूर्वाचार्यों को इष्ट है । यह शरीर शरीरीभाव शेषशेषीभाव विशिष्टाद्वैतवादियों का है । इसमें ननु नच करने का गुञ्जाइस नहीं है जिनको शङ्का हो वे किसी विशिष्टाद्वैतवादी पण्डितजी से समझ लेवें ॥९२॥

**आजानुबाहुर्निगमादिगीतः सत्यव्रतः सद्द्विभुजः स्वतन्त्रः ।**



**सद्धीरयोध्यापतिशार्ङ्गपाणिर्नित्याऽऽकृतिः सत्यदयादिगेहम् ॥९३॥**

**अस्य श्लोकस्याग्रिमश्लोकेन सम्बन्धोऽस्ति । आभ्यां द्वाभ्यां श्लो काभ्यां श्रीरामस्य वर्णनमस्ति । जानुपर्यन्तलम्बमानहस्तवानेवं हस्तौ परब्रह्मश्री रामस्यैव स्तः । एवं वेदादौ वर्णितोऽस्ति । सत्यप्रतिज्ञाशाली सुन्दरदर्शनीयद्वि हस्तवान् सत्यदयादिस्थानम्, पवित्रान्तः करणवान्, हस्ते शार्ङ्ग (हरिण- श्रृङ्गकृत) धनुराददानो नित्यशरीरवान् अपराधीनः समीचीनबुद्धिरेताद्दशः श्रीरामोऽयोध्यास्वामी वर्तते ॥९३॥**

इस श्लोक का आगे के श्लोक से सम्बन्ध है इन दोनों श्लोकों से श्रीरामजी का वर्णन है । घुटनें तक लम्बे हाथवाले ऐसे हाथ परब्रह्म श्रीरामजी के ही हैं । वेदादि में वर्णन किए गए हैं । सत्य प्रतिज्ञावाले सुन्दर दर्शनीय दो हाथवाले सत्य दया के स्थान पवित्र अन्तःकरणवाले हाथ में शार्ङ्ग धनुष लिए हुए नित्य शरीरवाले पराधीन रहित ऐसे श्रीरामजी अयोध्याजी के मालिक हैं ॥९३॥

**श्रुतिमार्गाब्जसप्ताश्वः श्रीरामो भक्तवत्सलः ।**
**जानरायपदेनापि स एव प्रथितो भुवि ॥९४॥**

**वेदमार्गरूपकमलेभ्यः सूर्यो भक्तप्रियो भक्तोपरिदयाकर्ता श्रीरामो विद्यते, पृथिव्यां जानरायपदेनापि प्रसिद्धोऽस्ति । जानरायः स्वेभ्यः सद्भ्यो भक्तेभ्यः सायुज्यमुक्तिदाता श्रीरामोऽस्ति । जनेभ्यः स्वकीयसद्भक्तेभ्यो राति- सायुज्यमुक्तिंददातीति जनरायः-स एव जानरायः । अस्य साधनप्रकार एवम् सायुज्यमुक्तिं रातीति विग्रहे कर्मण्यण् ( पा. ३,२,१ ) इत्यण्यनुबन्धलोपे 'आतो युक् चिण्कृतोः' (पा.७।३।३३ ) इति युगागमेऽनुबन्धलोपे कृद्योगे षष्ठ्यां कृतायामुपपदसमासे समासत्वात्प्रातिपदिकत्वे तदवयवस्य सुपो लुकि सति सायुज्यमुक्तिरायशब्दोनिष्पद्यते, ततो जनेभ्यः सायुज्यमुक्तिराय इति विग्रहे च तुर्थीतत्पुरुषसमासे समासत्वात्प्रातिपदिकत्त्वे तदवयवसुपोलुकि शाकपार्थिवा दित्वात् सायुज्यमुक्तिरूपमध्यमपदलोपे जनरायशब्दः सिध्यन्ति, ततः स्वार्थे ऽणिकृत आद्यचो वृद्धौ यस्येतिचेत्यकारलोपे जानराय शब्दात् सौ जानराय इति सिध्यति । यदि जनराय शब्दस्यार्थः क्रियेत जनानां-सद्भक्तानामन्तःकरण सद्भावज्ञ इति तदा दानार्थकस्य राधातोर्धातूनामनेकार्थत्त्वादिह ज्ञानार्थकत्व**

मङ्गीक्रियेत । धातूनामनेकार्थता स्वीकारे प्रमाणञ्च-परौ भुवोऽवज्ञान (६।३।५५) इति पाणिनिसूत्रम्। तत्र परिपूर्वकः भूधातोरर्थोऽनादरो भवति, अनादरः परिभवः परिभावस्तिरस्क्रियेत्यमरकोषात् । अत्रावज्ञानेऽनादरे घञ् सिद्धौ पुनरवज्ञानग्रहणसामर्थ्याद धातूनामनेकार्थत्वं ज्ञाप्यते । तेन वैयाकरणसमाजे तदुक्तीः परिभाव्य इत्यस्य मुनित्रयवचनानि विचार्येत्यर्थः स्वीक्रियते तथा माधवादिप्राचीनवैयाकरणवचनानि तिरस्कृत्येत्यर्थोऽमरकोषबलादाश्रीयते । प्रकृते राधातोर्ज्ञानार्थकत्वमङ्गीकृत्योक्तोऽर्थो जनरायशब्दस्य कृतः । समासस्तु जन आम् अन्तःकरणसद्भाव सु इत्यलौकिकविग्रहे षष्ठीतत्पुरुषस्ततः समासत्वात् प्रातिपदिकत्वे तदवयसुपोलुकि कर्मण्यण् इत्यणनुबन्धलोपे सुपि अनुबन्धलोपे कृद्योगे षष्ठ्यामुपपदसमासे शाकपार्थिवत्वान्मध्यमपदलोपे आद्यचो वृद्धावणोऽकारस्य लोपे सौ जानराय इति निष्पद्यते । लौकिकविग्रहस्तु जनानामन्तःकरणसद्भावं रातीति जनरायः स एव जानराय इति । भक्तमाले-जान ली हिय की अज्ञासीद्हृदयस्य (भावम्) इति ।

अथ जानरायनाम्ना भगवतः प्रसिद्धेर्वार्तास्वामीश्रीकेवलरामाचार्यस्य कनिष्ठो गुरुभ्राता श्रीरघुनाथदास उक्त (श्रीकेवलरामाचार्य) स्वामिनो जीवनचरितमलेखीत् । तत्रेदमलेखीत्, यत् मथुराधाम्नि स्थितकृष्णगङ्गाघट्टे श्रीकृष्णस्य मूर्तिः कृष्णपाषाणमयीबालुकायां प्रच्छन्ना पतिताऽऽसीत् भगवान् द्वारकाधामस्थार्चकाय स्वप्नेऽचकथत् , मम मूर्तिरमुकस्थाने सिकतायां निखाताऽस्ति अतिचिरन्तनी वर्तते सा। तां यूयमादाय द्वारिकायां स्थापयत । ततश्चत्वारस्तीर्थपूज्या भगवदर्चका निरसरन् । तत्र गत्वा तां मूर्तिमादाय द्वारकाम्प्रत्यागच्छन्त आसन् सायमभूत् ते तीर्थपूज्यार्चकास्ताम्मूर्तिमादाय झीथडा ग्रामे यत्रोक्तः स्वामी निवसन्नासीत् तत्र प्राप्ताः, स्वामी तानाहृत्य तास्तत्रैव न्यवासयत् । भोजनानन्तरं तां मूर्तिंदृष्ट्वा स्वामी स्पृहयति स्म यदियं मूर्तिर्मम मिलतु, पूजकानुवाच, परंते न स्वीचक्रुः। तदोक्तस्वामी भृशमाग्रहीत् यदिमां मूर्तिं मह्यं दत्तेति। अर्चकाः क्रुद्धा अवोचन्-यद् महान् सिद्धोऽसिचेत् इमां मूर्तिं नयतु इति उक्तः स्वामी तानुवाच ओम् प्रातरहं नेष्यामि । रात्रौ स्वामी किमपिनाभुक्त न च किमप्यपात् प्रभुं प्रार्थयामास प्रभुरुवाच प्रातस्तेऽङ्गुलीमवलम्बमानस्त्वदीय



मन्दिरं चलिष्यामि । प्रातरभूत् स्वामी स्नानभजनानन्तरमर्चकानुवाच भगवान्मदीयमन्दिरं याति । त ऊचुः केवलमङ्गुलीमवलम्ब्य नयतु, पश्यामत्वदीय सिद्धिम् । भगवान् नव वादनसमथे उक्तस्वामिनोऽङ्गुलीमवलम्ब्य तन्मन्दिरमगमत्, ततस्तीर्थपूज्या इमं चमत्कारमवलोक्य प्रसन्ना द्वारकां प्रास्थुः । अत एव भक्तमालकार श्रीनाभामहानुभावो लिखति स्म-जान ली हिय की स्वकीय सद्भक्तस्यान्तःकरणस्य भावं ज्ञात्वा तत्रैवास्थात् । अतो राधातोरर्थो ज्ञानं सङ्गच्छते। ततः प्रभृति तस्य भगवतोनाम जानरायेति पप्रथे । इयमेव मूर्तिः झीथडा स्थानमन्दिरेऽस्ति सर्वेश्वरश्रीरामचन्द्रस्य रूपेण ॥९४॥

वेद मार्गरूपी कमलों के लिए सूर्य, भक्तों के प्रेमी भक्तों पर दया करनेवाले श्रीरामजी हैं । पृथिवी के ऊपर वेही श्रीरामजी जानराय पद से भी प्रसिद्ध हैं । जानराय अपने सच्चे भक्तों के लिए सायुज्य मुक्ति को देनेवाले श्रीरामजी हैं । जनेभ्यः स्वकीय सद्भक्तेभ्यः राति सायुज्यमुक्तिं ददाति इति जनरायः चतुर्थ्यन्त जन उपपद रहते दानार्थ रा धातु से बाहुलक से सम्प्रदान में घञ् प्रत्यय हुआ है । तब युक् का आगम होके अनुबन्धलोप चतुर्थी समास होके विभक्तियों का लुक् हो जाता है तब जनराय शब्द बनता है । तब जनराय शब्द से स्वार्थिक तद्धित का अण् प्रत्यय होता है अनुबन्धलोप होके आदि वृद्धि होके, जानराय शब्द बनता है। यदि जानराय शब्द का अर्थ किया जाता है कि जनों के सद्भक्तों के अन्तःकरण के सद्भावों को जाननेवाले रा धातु का दान अर्थ है। किन्तु यहाँ पर रा धातु का ज्ञान अर्थ मानना पडेगा। क्योंकि धातुओं के अनेक अर्थ माने जाते हैं कारण कि 'परोभुवोऽवज्ञाने' इस पर पाणिनि मुनिकृत सूत्र में अवज्ञान ग्रहण किया गया है । यहां यह प्रश्न है कि परिपूर्वक भूधातु का अनादर अर्थ है ही । अनादरः परिभवः परिभावस्तिरस्क्रिया इस अमरकोश के प्रमाण से परिपूर्वक भूधातु का अनादर अर्थ है फिर पाणिनि मुनिजी के सूत्र में अवज्ञान ग्रहण क्यों किया गया । इसीसे निश्चित होता है कि धातुओं के अनेक अर्थ होते हैं । अवज्ञान ग्रहण में यह तात्पर्य है केवल परिपूर्वक भूधातु का विचार भी अर्थ होता है । इसीसे-तदुक्तीः परिभाव्य च । इसका अर्थ विद्वद् वर्ग ऐसा करते हैं कि-पाणिनि कात्यायन पातञ्जलि इनके कथन को विचार करके और ऐसा भी अर्थ करते हैं माधवादि पण्डितों के कथनों को उनकी व्याख्या को परिभाव

तिरस्कार अनादर करके इसलिए माना जाता है कि धातुओं के अनेक अर्थ होते हैं उक्त सूत्र में अवज्ञान पद रखना ही पड़ता है तब यहां जानराय में रा धातु का ज्ञान अर्थ मानकर भी पूर्वोक्त रीति से जनानां सद्भक्तानाम् अन्तःकरणभावं राति जानाति यह व्युत्पत्ति करने से उक्त शब्द बन सकता है। अन्तःकरणभाव का ऊपर से अध्याहार करना आवश्यक है। यहाँ बाहुलक से कर्ता में घञ् किया जायगा जनान् सद्भक्तान् राति जानाति सद्भक्ताभिप्रायान् राति जानाति इस अभिप्राय से बाहुलक से कर्ता में घञ् प्रत्यय समझना ठीक है। यहां बाहुलक से द्वितीयान्त जन शब्द को षष्ठ्यन्त मान के 'संज्ञायाञ्ज' इससे समास होके पूर्वोक्त रीति से 'जानराय' पद की सिद्धि समझनी चाहिए। ऐसा कष्ट क्यों किया गया ? सुनिए जानराय शब्द का यही अर्थ ठीक होता है सद्भक्तों के अन्तःकरण के भावों को जाननेवाले यही बात, भक्त माल में कहीं लिखी है-जान ली हिय की' इतनी पंक्ति भक्तमाल की है।

स्वामी श्रीकेवलरामकूवाचार्यजी के छोटे गुरुभाई पं. श्रीरघुनाथदासजी उक्त स्वामीजी का जीवन चरित्र लिखे हैं उसमें यह लिखा है कि मथुरा धाम स्थित कृष्ण गङ्गाघाट पर श्रीकृष्णजी की मूर्ति काले पत्थर की रेती में गडी थी भगवान् द्वारका धाम के पूजारी को स्वप्न दिये कि हमारी मूर्ति अमुक ठिकाने पर रेती में गडी हुई है बहुत प्राचीन है उसको तुमलोग द्वारका में लाकर पधराओ पूजारी पण्डा चार मिल के वहां जाके वह मूर्ति लेके द्वारका जा रहे थे साम हो गई पूजारी पण्डा तो उस मूर्ति को लेके झीथड़ा ग्राम में जहां उक्त स्वामीजी रहते थे वहां पहुँचे स्वामीजी उनका आदर करके वहीं निवासादि करवा दिये भोजन के बाद उस मूर्ति को देख के उक्त स्वामीजी की इच्छा हुई कि यह मूर्ति हमको मिले तो पूजारी पण्डों से कहे वे लोग नहीं कहे तब उक्त स्वामीजी बहुत आग्रह किए कि यह मूर्ति हमको दीजिए पण्डा गुस्सा होके बोला कि बड़े सिद्ध हो तो तुम ले जाओ उक्त स्वामीजी हाँ सबेरे ले जायेंगे रात्री में स्वामीजी कुछ भी नहीं खाए पिए प्रभु से प्रार्थना किए प्रभु बोले सबेरे तुम्हारी अंगुली पकड़ के हम तुम्हारे मन्दिर में चलेंगे सबेरा हुआ स्वामीजी स्नान भजन करके पण्डों से कहे कि भगवान् हमारे मन्दिर में जाते हैं। वे बोले कि केवल अंगुली पकड़ा के ले जाओ देखें तुम्हारी सिद्धाई। भगवान् ९ बजे उक्त स्वामीजी की अंगुली पकड़ के मन्दिर में चले गए पण्डा लोग यह चमत्कार देख



के प्रसन्न होके द्वारका को चले गए। इसीसे श्रीनाभाजी लिखें हैं कि (जान ली हिय की) अपने सद्भक्त के अन्तःकरण के भाव को जानके वहीं पधर गए हैं। इसलिए यहां रा धातु का अर्थ जानना संगत है। तब से वहां के भगवान् का नाम जानराय पड़ गया है वही मूर्ति अभी झीथडा स्थान मन्दिर में है सर्वेश्वर श्रीरामचन्द्रजी के रूप में ॥९४॥

**साकारं ज्ञायते वस्तु भूमिजलादिवत् सदा ।**
**शशशृङ्गादिवज्जातु निराकारं न बुध्यते ॥९५॥**

**द्विर्बद्धं सुबद्धं भवती-तिन्यायेन विशिष्टाद्वैतवादिनो वदन्ति यद हे सर्वथा निराकारवादिनो ! यद्यपि वयं विशिष्टाद्वैतवादिनोऽसकृदुक्तवन्तः प्राग् यद् निर् आकारेति पदद्वयमस्ति निराकारे सर्वथाऽऽकाराभावसत्त्वे बहुब्रीहि समासो न भवितुमर्हेत् , अतो निराकारपदस्यार्थः-कर्मानधीनो नित्यो दिव्य आकारो (मूर्तिः) ब्रह्मणोऽस्ति, तथाऽपि किञ्चिद् दृष्टान्तं दत्त्वा वयं विशिष्टाद्वैतवादिनो ब्रूमहे, हे सर्वथाऽऽकारेण-मूर्त्या रहितं ब्रह्म स्वीकर्तारः ! साऽऽकारं-मूर्तिमदेव ब्रह्म विद्यते, यतः साकारमेव किमपि वस्तु पृथ्वीजलादिकं यथा सर्वदा ज्ञायते, यतः पृथ्वीजलादिसाकारमस्ति, अत एतज्ज्ञायते, शशश्रृङ्गं खपुष्पमिव निराकारं न ज्ञायते । अतो जगत्कर्तृकर्मानधीननित्यदिव्याकारशालिब्रह्म वर्तते ॥९५॥**

द्विर्बद्धं सुबद्धं भवति इस न्याय से विशिष्टाद्वैतवादी कहते हैं कि-हे सर्वथा निराकारवादियों यद्यपि हम विशिष्टाद्वैतवाले कई वखत कह चुके हैं पीछे कि निर् आकार ऐसे दो पद हैं निराकार में सर्वथा आकार के अभाव होने से बहुब्रीहि समास नहीं हो सकेगा इसलिए निराकार पद का अर्थ कर्माधीन रहित नित्य आकार मूर्ति ब्रह्म की है तो भी कुछ दृष्टान्त देके हम विशिष्टाद्वैतवादी कहते हैं-हे सर्वथा आकार मूर्ति रहित ब्रह्म को मानने वालों साकार आकार मूर्ति सहित ही वस्तु कोई भी पदार्थ पृथिवी जल आदि के तरह हमेशा जाना जाता है क्योंकि पृथिवी आदि वस्तु साकार है इसलिए ये जाने जाते हैं खरगोश के सींग के तरह आकाश पुष्प के तरह निराकार सर्वथा आकार रहित वस्तु पदार्थ जाना नहीं जाता है। इसलिए जगत् का कर्ता ब्रह्म अकर्माधीन नित्य आकार मूर्तिवाला है ॥९५॥

**ज्ञातृज्ञेयादि भेदे हि भोगमात्रादि साम्यकम् ।**

**व्यासोक्तिः कथयन्यती स्यात् सार्थिका नान्यथा किल ॥९६॥**

पुनरपि सद्दृष्टान्तकेवलाद्वैतवादं खण्डति-ज्ञातृज्ञेयेत्यादिना । हे केवलाद्वैतवादिनो ? भवतां सर्वेषां बुद्धौ को रोगो जातोऽस्ति ? यत् स्थले स्थले कथयन्तो विचरन्ति यत् केवलाद्वैतवाद एव सत्यो विद्यते, शेषा निः शेषा मृषा सन्ति । अरे केवलाद्वैतवादिनः ! किञ्चिद् वुध्यध्वम् ज्ञाता ज्ञानकर्ता, ज्ञातृपदे ज्ञाधातोस्तृच् प्रत्ययः कर्तरि 'ण्वुल्तृचौ' इति सूत्रेण जातोऽस्ति ततो ज्ञातृ शब्दस्यार्थो ज्ञानाश्रय इति । ज्ञेयशब्दे अचो यत् इति यत्प्रत्यये ईद्यति इत्याकारस्येदादेशे गुणे ज्ञेयशब्दे निष्पद्यते-तयोरेव कृत्यक्तखलर्थाःइति कर्मणि यतो विधानाज्ज्ञानविषयो ज्ञेय इत्यर्थः । ज्ञानाश्रयो जीवस्तथा ज्ञानाश्रयीभूतं ब्रह्म भवति । किन्तु ज्ञानविषयीभूतं तु ब्रह्म भवति, अतो ज्ञानज्ञेयादिभेद एव भोगमात्रसाम्यलिङ्गाच्च इति प्रमाणेन सायुज्यमुक्तिमतोजीवस्य केवलभोग एव ब्रह्मसमानतां वदतो व्यासदेवस्य कथनं सार्थकं भवति । यदि केवलाद्वैतं मन्यते, तदाचार्य श्रीव्यासदेवस्य कथनं सार्थकं न भवेत् । अतो विशिष्टाद्वैतसिद्धान्त एव समीचीनोऽस्ति । अस्मिन्नेव श्रीव्यासदेवस्य कथनं सार्थकं भवति । ज्ञातृज्ञेयादि भावं केवलाद्वैतवादिनो मिथ्या वदन्ति । अस्मिन् मते श्रुतिस्मृतिव्यासदेवकथनं निरर्थकं भवति ।

**अथ सत्ख्यातिवादिनो विशिष्टाद्वैतसिद्धान्तानुयायिनो वदन्ति यदनिर्वचनीयख्यातिं यत् केवलाद्वैतवादिनो मन्यन्ते, अयं सिद्धान्तो न समीचीनः ॥९६॥**

फिर भी दृष्टान्त देके केवल अद्वैतवाद का खण्डन करते हैं-हे केवल अद्वैत वादियों आप सबकी बुद्धि में क्या रोग हो गया है जो जगह जगह पर कहते फिरते हो कि केवल अद्वैत ब्रह्म ही सत्य है बांकी सब झूठा है । अरे केवल अद्वैतवादियों जरा समझो । ज्ञाता जाननेवाला ज्ञाता में कर्ता में कृदन्त प्रकरण में तृच् प्रत्यय हुआ है इस तृच् प्रत्यय का अर्थ है आश्रय तो ज्ञातृ पद का अर्थ है ज्ञानाश्रय । ज्ञेय में कर्म में यत् प्रत्यय होता है इसका अर्थ है विषय तब ज्ञेय पद का अर्थ होगा ज्ञान का विषय । ज्ञानाश्रय तो जीव तथा ब्रह्म दोनों होते हैं किन्तु ज्ञान का विषय तो केवल ब्रह्म होता है । इसलिए ज्ञान ज्ञेयादि के भेद में ही 'भोगमात्रसाम्यलिङ्गाच्च' इस प्रमाण से सायुज्यमुक्तिवाले जीवों का केवल भोग में ही ब्रह्म की समानता को



कहता हुआ व्यासदेवजी का कथन सार्थक होता है । यदि केवल अद्वैत माना जाता है तो व्यासदेवजी का कथन सार्थक नहीं होवेगा इसलिए विशिष्टाद्वैत सिद्धान्त ही ठीक है इसी में व्यासदेवजी का कथन सार्थक होता है । ज्ञातृ ज्ञेयादि भाव को केवल अद्वैतवादी मिथ्या झूठा बताते हैं इस मत में श्रुति स्मृति तथा पूर्वाचार्य व्यास देवजी का कथन निरर्थक हो रहा है ।

अब सत्ख्यातिवादी विशिष्टाद्वैत सिद्धान्त के अनुयायी कह रहे हैं कि-अनिर्वचनीय ख्याति जो केवल अद्वैतवादी मानते हैं यह सिद्धान्त ठीक नहीं है ॥९६॥

**अनिर्वाच्याख्यातिश्च सदसद्विलक्षणार्थिकाऽस्तीति ते ।**
**कथं न खपुष्पसदृशं कथं शशश्रृङ्गवत् तद्विलक्षणम् ॥९७॥**

अथ सत्ख्यातिवादिनो विशिष्टाद्वैतानुयायिन आहुः-यत् सदसद्भ्यामाभ्यां द्वाभ्यां विलक्षणविषयवत्यनिर्वचनख्यातिरस्ति, ईदृशो युष्माकं केवलाद्वैतवादिनां सिद्धान्त आकाशकुसुममिव कथं न स्वीक्रियताम् ? यूयं कथयथ यन्न सदस्ति न चासदस्ति किन्तु आभ्यां द्वाभ्यां विलक्षणमेव दृश्यमानं वस्तु विद्यते इदं वः कथनं शशश्रृङ्गमिव कथं न वर्तते ? अरेऽनिर्वचनीयख्यातिवादिनो ! जगति सदसती द्वे एव वस्तुनी स्तः प्रसिद्धे, आभ्यां भिन्नस्तृतीयः पदार्थो भुवनेऽप्रसिद्धोऽस्ति, अरे भ्रातरः ! एतावद् यूयं न जानीध्वे यत् सदसद्भ्यां विलक्षणः पदार्थ एव न जगत्युपलभ्यते, तदा पुनस्तस्य समयस्य चर्चाकरणमेव वृथाऽस्ति । महाशयाः ! यथा खपुष्पं शशविषाणंच द्वे जगत्यप्रसिद्धे स्तस्तथैव जगति सदसद्भ्यां विलक्षणः पदार्थोऽप्रसिद्धोवर्तते । अतो भवतां मतोऽनिर्वचनीयख्यातिरपि अप्रसिद्धोऽस्ति । हेयोऽस्ति । महावैयाकरणेन नागेशेन स्वलघुञ्जूषायामियमनिर्वनीयख्यातिनितरामखण्डि । स लिखति स्मसदसद्भ्यां भिन्नः पदार्थः खपुष्पशशश्रृङ्गवदप्रसिद्धोऽस्ति । अतएषा स्थितिरन्धेनैव नीयमाना यथाऽन्धा इतिवदस्तीतिध्येयम् ॥९७॥

अब सत्ख्यातिवादी विशिष्टाद्वैत के अनुयायी आचार्य कहते हैं कि सत् और असत् इन दोनों से विलक्षण विषयवाली अनिर्वचनीय ख्याति है ऐसा तुम केवल अद्वैतवादी का सिद्धान्त आकाश के पुष्प के तरह क्यों नहीं माना जावे और तुमलोग कहते हो कि न सत् है न असत् है किन्तु इन दोनों से विलक्षण ही दृश्यमान पदार्थ

हैं यह कथन खरहे के शींग के समान क्यों नहीं है ? अरे अनिर्वचनीय ख्यातिवादी ! जगत् में सद् और असत् दो ही पदार्थ प्रसिद्ध हैं इन दोनों से विलक्षण तीसरा पदार्थ ही जगत् में अप्रसिद्ध है अरे भाई ! इतना तुम नहीं जानते हो की जगत् में सत् असत् विलक्षण पदार्थ हीं नहीं उपलब्ध हैं तो फिर उस समय की चर्चा करना ही व्यर्थ है । महाशयजी जैसे जगत् में आकाश का पुष्प तथा खरहे का शींग ये दोनों अप्रसिद्ध हैं उसी तरह से जगत् में सत् तथा असत् इनसे विलक्षण पदार्थ ही अप्रसिद्ध है । इसलिए आप लोगों की मानी हुई अनिर्वचनीय ख्याति भी अप्रसिद्ध है छोड़ने के लायक है। महावैयाकरण श्रीनागेशभट्टजी अपनी लघुमञ्जूषा में इस अनिर्वचनीय ख्याति का खूब खण्डन किए हैं वे लिखते हैं-जगत् में सत् असत् इनसे भिन्न पदार्थ ही खपुष्प खरहे के शींग के समान अप्रसिद्ध है । अतः इन सबों की स्थिति-अन्धेनैव नीयमाना यथान्धा की जैसी है ॥९७॥

**वस्त्वेवाप्रसिद्धं नु जगति शुक्त्यादौ रजतादि सत्यम् ।**
**अस्तीति विज्ञायेत पञ्चीकरणप्रक्रियया समकैः ॥९८॥**

**वस्त्वेवाप्रसिद्धं नु एतावत्पदस्य व्याख्याऽस्मात् प्रथमश्लोकस्य व्याख्यायां जाताऽस्ति । जगति सदसद्भ्यां भिन्नो विलक्षणः पदार्थोऽप्रसिद्धोऽस्ति । अनिर्वचनीयख्यातिवादिनो ब्रुवते-यच्छुक्ताविदं रजतम् अत्र शुक्तिकायां रजतं प्रातिभासिं वर्तते, केवलं रजतस्य प्रतीतिर्भवति, परन्तु रजतस्याऽऽभासोऽस्ति, सा रजतप्रतीतिर्वस्तुतो सत्याऽस्ति । यतः केवलाद्वैतवाद्यनिर्वचनीयख्यातिवादी ब्रूते यदस्माकं मते वस्तुतो ब्रह्मातिरिक्तं सर्वं वस्तु असत्यं वर्तते । शुक्तौ विलक्षणं रजतं नोत्पद्यते, तद् वस्तुतोऽसत्यमेवास्ति । अस्योपरि सत्ख्यातिवादिनो वदन्ति-यच्छुक्त्यादौ यद्रजतादिप्रतीतिरस्ति, सा सत्यैवास्ति । प्रश्नः कथम् ?, उत्तरम्-पञ्चीकरणप्रक्रियया शुक्त्यादौ रजतं सत्यमस्ति । एवं ज्ञायते, यत् शास्त्रसम्मतमस्ति ॥९८॥**

वस्त्वेवाप्रसिद्धंनुजगति, इतने पद की व्याख्या इससे प्रथम श्लोक की व्याख्या में हो चुकी है। जगत् में सत् तथा असत् इनसे भिन्न विलक्षण पदार्थ ही अप्रसिद्ध है। अनिर्वचनीय ख्यातिवादी कहते हैं कि-शुक्ताविदं रजतम् सीपी में यह चाँदी है यहां पर सीपी में चाँदी प्रातिभासिक है केवल चाँदी की प्रतीति होती है वस्तुतः वहाँ



पर चाँदी का आभास वह चाँदी की प्रतीति असत्य है कारण केवल अद्वैतवादी अनिर्वचनीय ख्यातिवादी कहता है कि-हमारे मत में वस्तुतः ब्रह्म से अतिरिक्त सभी कुछ असत्य है । शुक्ति में विलक्षण रजत की उत्पत्ति होती है वह वस्तुतः असत्य ही है । इस पर सत्ख्यातिवादी कहते हैं कि-शुक्ति आदि में जो चाँदी की प्रतीति है वह सत्य ही है । प्रश्न, कैसे ? उत्तर पञ्चीकरण प्रक्रिया से शुक्त्यादि में चाँदी सत्य ही है ऐसा जाना जाता है, जो शास्त्र सम्मत है ॥९८॥

**सा तु भवताऽपि सततं मन्यते तयाऽस्ति सर्वं सर्वत्र ।**
**समस्मिन् सर्वलाभः स्यादिति न वाच्यं तत् तद्विशेषात् ॥९९॥**

**विशिष्टाद्वैतवाद्याचार्यो वदति-वस्तुतः सत्ख्यातिवादो हि जीवितोऽस्ति, यतः सत्ख्यातिः-अर्थात् सर्वत्रसर्वपदार्थप्रतीतिः सा समीचीनैवास्ति पञ्चीकरणप्रक्रियया सर्वेपदार्थाः सर्वत्र स्थलेषु प्रतीयन्ते । तया पञ्चीकरणप्रक्रियया भवतः केवलाद्वैतवादिनो ब्रह्मणो भिन्नं समस्तजगत् वस्तुतोऽसत्यं मन्यमाना अपि स्वीकुर्वन्ति तदा तु सर्वे पदार्थाः सर्वत्र प्रतीता भवितुं शक्नुयुः, पृथिवीशुक्तौ वह्निलाभेन भवितव्यम् शुक्तिग्रहणे करे जलनेन भवितव्यम् तत्तु अस्माभिर्नैव दृश्यते । सत्ख्यातिवादिन उत्तरं ददति अग्रिमश्लोकेन ॥९९॥**

विशिष्टाद्वैतवादी आचार्य कहते हैं वस्तुतः सत्ख्यातिवाद ही जीवित है कारण कि सत्ख्याति माने सर्वत्र सभी पदार्थों की प्रतीति होना सो ठीक ही है पञ्चीकरण प्रक्रिया से सभी पदार्थ सभी स्थलों में प्रतीत होते हैं । उस पञ्चीकरण प्रक्रिया को आप केवल अद्वैतवादी ब्रह्म से भिन्न समस्त जगत् को वस्तुतः असत्य माननेवाले भी मानते हैं ।

केवल अद्वैतवादी कहते हैं कि यदि पञ्चीकरण प्रक्रिया की चर्चा करते हो तब तो सभी पदार्थ सभी पदार्थों में प्रतीति के विषय होना चाहिए पृथिवी शुक्ति में अग्नि का लाभ होना चाहिए शुक्ति के लेने में हाथ में जलन होना चाहिए सो तो हम ऐसा नहीं देखते हैं । सत्ख्यातिवादी पूर्वोक्त प्रश्न का उत्तर देते हैं अगले श्लोक से ॥९९॥

**क्षितिशुक्तौ शुक्त्यंशोऽधिकोऽस्तीति स उपलभ्यते सर्वैः ।**
**तेजोभागाल्पत्वान्न तदुपलभ्यते मद्विजयः ॥१००॥**

**सत्ख्यातिवादिन आचार्या आहुर्यद् योऽनिर्वचनीयख्यातिवादी केवला**

द्वैतवादस्य जीवयिता कथ्यतेऽस्माकं सिद्धान्ते वस्तुतो ब्रह्मातिरिक्तपदार्थोऽसत्यः स्वीक्रियते तदा सत्ख्यातिवादिन उत्तरमस्ति-पञ्चीकरणप्रक्रियया सर्वे पदार्थाः सर्वत्र स्थलेषु वर्तन्ते तदा सत्ख्यातिवादिमतं स्थिरं भवति । व्यासेन निरणायि यत् यत्र पदार्थे यस्याधिक्यं भवति, तत्र तस्यैव प्रतीतिर्भवति, यत्र यस्याल्पो भागस्तिष्ठति, तत्र तस्याल्पभागवतः प्रतितीरधिकभागवति न भवति । शुक्तौ पृथिवीभागोऽधिकोऽस्तीत्यतः सर्वैरूपलभ्यते । अग्नेर्भागोऽधिको नास्ति अल्पतरोऽस्त्यतः शुक्तिपृथिव्यां वह्नेः प्रतीतिर्न भवति । अत्र सत्ख्यातिवादिनामेव विजयोऽभूत् । अनिर्वचनीयख्यातिवादिकेवलमद्वैतवादिनां पराजयोऽभूत् । यत आचार्या वदन्ति वैदिकत्रिवृत्करणप्रक्रियया तदुपलक्षितपञ्चीकरणप्रक्रियया सर्वव्यवहारसामान्यत्वरूपं-यदर्धं तस्य नाम तत् इति ॥१००॥

सत्ख्यातिवादी आचार्य कहते हैं कि-जो अनिर्वचनीय ख्यातिवादी केवल अद्वैतवाद को जीवित रखनेवाला कहता है हमारे सिद्धान्त में वस्तुतः ब्रह्म से भिन्न पदार्थ असत्य माने जाते हैं तो सत्ख्यातिवादी का उत्तर है-पञ्चीकरण प्रक्रिया से सभी पदार्थ सभी जगह पर रहते हैं तो सत् ख्यातिवादी का मत स्थिर होता है । व्यास जी ने निर्णय किया है कि जिस पदार्थ में जिसका अधिकता होती है उसमें उसी पदार्थ की प्रतीति होती है जिसमें जिसका कम भाग है उस कम भागवाले की प्रतीति अधिक भागवाले में नहीं होती है । सीपी में पृथिवी का भाग अधिक है इसलिए वह पृथिवी का भाग सीपी में सबको उपलब्ध होता है । अग्नि का भाग अधिक नहीं है बहुत कम है इसलिए सीपी पृथिवी में अग्नि की प्रतीति नहीं होती है । यहां पर हम सत्ख्यातिवादियों का ही विजय हो गया है । अनिर्वचनीय ख्याति वादी केवल अद्वैतवादी लोगों का पराजय हो गया है क्योंकि आचार्यजी कहते हैं-'यदर्धं तस्य नाम तत्' ॥१००॥

**तद्विलक्षणोत्पत्ती रजतस्य जायते नहि सतोजनेः ।**
**निषेधनादतश्च सत्ख्यातेः सिद्धिरनिर्वाच्यं कस्मात् ? ॥१०१॥**

अथानिर्वचनीयवादिनां केवलद्वैतवादं पुष्णान्तां ब्रह्मभिन्नं समस्तं जगद् वस्तुतो मिथ्याऽर्थादसत्यं स्वीकुर्वतां मते वितर्तवादोऽस्तीत्येते वदन्ति यच्छुक्ताविदं रजतमित्यत्र शुक्तौ विवर्तवादानुसारेण विलक्षणरजतस्योत्पत्तिर्भवति,



तद्रजतं प्रातिभासिकं काल्पनिकमसत्यमेवास्ति । परिणामवादः सोऽस्ति यत्स्वोपादानकारणात् समानसत्ताकं कार्यमुत्पद्यते । यथा दुग्धाद्दधि । विवर्तवादः सोऽसि यत्स्वोपादानविषयाद्भिन्नसत्ताकं कार्यमुत्पद्यते। यथा शुक्तिः पृथिवी वर्तते । अत्र विषमसत्ताकमितरं तेज उत्पद्यते । अथ सत्ख्यातिवादिनो वदन्ति-पञ्चीकरणक्रियया सर्वे पदार्थाः सर्वत्र तिष्ठन्ति तत्र न्यूनाधिककथा भिन्नाऽस्ति । विवर्तवादिनोलपन्ति-यच्छुक्तौ रजतं विलक्षणमुत्पद्यते । अथ सत्ख्यातिवादिनो वदन्ति शुक्तौ विलक्षणरजतोत्पत्तिर्नैवभवति यतः पञ्चीकरणप्रक्रियया तत्र शुक्तौ रजतमस्त्येव, तदा यत्र यः पदार्थोऽस्त्येव तदा तस्योत्पत्ति स्वीकारो न भवति । यतः सत उत्पत्तिरेव न विद्यते । अतोऽयं विवर्तवादोऽनिर्वचनीयख्यातिवादिनां निरर्थकोऽस्ति । यो यत्रास्ति पुनरपि तस्योत्पत्तिस्वीकरणं व्यर्थमेवेति सर्वसमयः । अतः सत्ख्यातेः सिद्धिर्भवति । अतोऽनिर्वचनीयख्यातेः सिद्धिर्न भवितु मर्हति । ततश्चानिर्वचनीयख्यातेरङ्गं विवर्तवादो निरर्थकोऽभूत् तदाऽनिर्वचनीय ख्यातिरपि व्यर्था विद्यते । अतः सत्ख्यातेरेव विजयो जायते विरम्यते प्रपञ्चादतोऽत्र सत्ख्यातिविजयवादप्रबन्धोऽनुसन्धेयो विशेषार्थिभिरितिदिक् ॥१०१॥

अब अनिर्वचनीय ख्यातिवादी केवल अद्वैतवाद के पोषक ब्रह्म से भिन्न समस्त जगत् को वस्तुतः मिथ्या असत्य माननेवालों के मत में विवर्तवाद स्वीकृत है ये लोग कहते हैं कि-शुक्ताविदं रजतम् । यहां सीपी में विवर्तवाद के हिसाब से विलक्षण रजत की उत्पत्ति होती है । वह रजत प्रातिभासिक काल्पनिक असत्य ही है । परिणामवाद वह है जो अपने उपादानकारण के समान सत्तावाला कार्य उत्पन्न होवे जैसे दूध से दही । विवर्तवाद वह है जो अपने उपादान विषय से भिन्न सत्ता वाला कार्य उत्पन्न होवे जैसे सीपी पृथिवी है इसमें विषमसत्तावाला रजत तेज उत्पन्न होता है । अब सत्ख्यातिवादी कहते हैं पञ्चीकरण प्रक्रिया से सभी पदार्थ सभी में है कमती विशेष की बात भिन्न है । विवर्तवादी कहते हैं कि सीपी में विलक्षण रजत उत्पन्न होता है । सत्ख्यातिवादी कहते हैं कि सीपी में विलक्षण रजत की उत्पत्ति होती ही नहीं है कारण की पञ्चीकरण प्रक्रिया से वहां सीपी में रजत है ही तो जहां जो पदार्थ है ही तब वहां उसकी उत्पत्ति मानना निषेध है कारण कि सत् की उत्पत्ति

निषेध है। इसलिए ये विवर्तवाद अनिर्वचनीय ख्यातिवादियों का निरर्थक है। जो जहां है फिर भी उसकी वहाँ मानना निरर्थक है। अतः सत्ख्याति की सिद्धि होती है। अनिर्वचनीयख्याति की सिद्धि नहीं हो सकती है। अनिर्वचनीयख्याति का अङ्ग विवर्तवाद निरर्थक हो गया तो अनिर्वचनीयख्याति भी निरर्थक है। इसलिए सत्ख्यातिवाद का ही विजय है ॥१०१॥

**धृतोर्ध्वपुण्ड्र इत्येषा श्रीधन्वनाऽङ्कितः श्रुतिः ।**
**ज्ञायतां च हि सद् बीजमूर्ध्वपुण्ड्रधनुर्विधौ ॥१०२॥**

अद्य जगति एतादृशा एतादृशाः शैवाः शाक्ताश्च बहवः सन्ति ये वेदान् सस्वरार्थान्नाधीतवन्तः सद्गुरोः। त एतादृशमेतादृशमादेशं कुर्वन्ति यदत्र श्रीसम्प्रदाये (श्रीरामानन्दसम्प्रदाये) जनाः शिष्याभूत्वा शिर आदिषु द्वादशसु स्थानेषूर्ध्वपुण्ड्रं कुर्वन्ति, तथा तप्तधनुर्बाणाभ्यां स्वबाहुचिह्नितौ विदधति । इयं प्रथाऽवैदिकी विद्यते । वेदेषु अनयोश्चर्चा क्वापि नास्ति तदेयं प्रथाऽवैदिकीवर्तते। अवैदिकचिह्नितीभवनेन को लाभोऽस्ति ? । अस्मिन् पूर्वपक्षे सत्ख्यातिपोषकविशिष्टाद्वैतस्य प्रकृष्ट आचार्य आह-अनयोर्द्वयोर्विषययोरहं भवदीयसमक्षे वैदिकप्रमाणं समर्पयामि तन्निशम्य सन्तुष्टेयुः। सर्वेषां साम्प्रदायिकरहस्यज्ञानं न तिष्ठति। पूर्वपरम्परया कश्चित् कश्चिच्छ्रीवैष्णवरहस्यानि किञ्चिज्जानीते शेषा निःशेषा वेदरहस्यानि न जानते । किन्तु वैष्णवानामूर्ध्वपुण्ड्रतिलकविषये तथा तप्तधनुर्बाणधारणविषये कमपि कमप्याक्षेपं कुर्वन्ति। एतेषां सर्वेषामाक्षेपं दूरीकर्तुं किमपि प्रमाणमुपस्थाप्यते-श्रीवैष्णवाचार्या आहु यद् भवदीयआक्षेपो व्यर्थोऽस्ति-यदूर्ध्वपुण्ड्रतिलकविधौ तथा तप्तधनुर्बाणधारणविधौ यजुर्वेदकठशाखायास्तृतीयप्रश्ने तृतीयेऽनुवाके ३-३ लिखितमस्ति-धृतोर्ध्वपुण्ड्रः' इत्येषा श्रुतिः। श्रीधन्वनाङ्कितः' इत्येषा श्रुतिः। ऊर्ध्वपुण्ड्रधनुर्विधौ सद्बीजं ज्ञायतां हि निश्चयम्। ऊर्ध्वपुण्ड्रतिलकविधौ तथा तप्तधनुर्बाणविधौ सत् प्रमाणमिदमस्ति। दृश्यतां द्वयोर्विध्योरयमेक एव मन्त्रो वर्तते । यजुर्वेदस्य कठशाखायास्तृतीयप्रश्नस्य तृतीयेऽनुवाके श्रुतिरियमस्ति-धृतोर्ध्वपुण्ड्रः कृतचक्रधारी विष्णुं परं ध्यायति यो महात्मा। स्वरेण मन्त्रेण सदा हृदिस्थितम्परात्परं यं महतो महान्तम् ॥१॥

यः श्रीवैष्णवः सन् सदाचारी सर्ववेदवेदाङ्गपारंगतो विद्वान् श्रीगुरोः



सविधिप्राप्तललाटादिद्वादशाङ्गेषु चित्रकूटादिपवित्रस्थानीयश्वेतमृत्तिकया द्वादशोर्ध्वपुण्ड्रतिलकस्य धारणं प्रतिदिनं करोति तथा सदाचारपालनसहितो धारणादिपालयति भगवत्सेवां पूजां विदधाति गुरुतो लब्धं श्रीराममहामन्त्रं सार्थानुसन्धानं सविधि आवाहनविसर्जनसहितं जपति, स सायुज्यपदं लभते। गुरुकरकमलेन तप्तबाणादिचिह्नितः पवित्रान्तः करणः स्वहृदि परमपूज्यं परात्परमस्मदादिपरमिन्द्रादिपरं कार्यब्रह्मास्मात्कार्यब्रह्मणः परं विष्णुपदवाच्यं सर्वेश्वरपरब्रह्मश्रीरामं ध्यायति पूजयति, स सायुज्यमुक्तिं प्राप्य सुखीभवति ।

अथ तत्रधनुर्बाणधारणमहत्त्वमुपजीव्य कतिचिच्छ्रुतिर्लिखामः-यजुर्वेदस्य २९ एकोनत्रिंशत्तमाध्यायस्येयं श्रुतिरस्ति-धन्वनाऽङ्किताग धन्वनाऽऽजिं जयेम धन्वना तीव्राः समदो जयेम धनुः शत्रोरपकामं कृणोति धन्वना सर्वाः प्रदिशो जयेम ॥ अस्यार्थोऽत्र धनुः शब्दो बाणस्याप्युपलक्षकं (बोधकं) वर्तते। श्रीरामस्य धनुर्बाणद्वितयचिह्निता अर्थाद्दक्षिणेबाहौ द्वाभ्यां शराभ्यां वामे धनुषाऽङ्किताः सन्तो वयं सशिष्या स-निजपरिवाराः पापेभ्यो मुक्ताः शुद्धा भवन्तः सांसारिकविषयाऽऽसक्ता अधः पातिनाहेतुभ्यः कामक्रोधलोभमोहमदमात्सर्यप्रभृतिभ्योऽन्तः शत्रुभ्योऽबिभ्यतस्ताञ्जयामः ! सविधिधृता धर्नुर्बाण अस्मदीयजन्मजन्मान्तरीयपापकर्माणि विनाशयन्ति । श्रीरामधनुर्बाण-लाञ्छिता वयं संसारे दिगीशैरिन्द्रादिभिः काम्यमानाञ्जन्ममरणकारणविषयान् काङ्क्षता स्वमनो वशीकुर्मः। दृश्यताम् यो वै नित्यं धनुर्वाणाङ्कितो भवति स पाप्मानं तरति संसारं तरति स भगवदाश्रितो भवति स भगवत्सायुज्यं व्रजति। निश्चयेन यो मनुष्यः सदा श्रीरामधनुर्बाणैश्चिह्नितो भवति, स पापैर्मुक्तो भवति, स संसारादाशु शरीरसम्बन्धरहितो भवति जन्ममरणं विनश्यति, स सर्व-शक्तिसम्पन्नस्य श्रीरास्य प्रियो भवति, स भगवतः श्रीरामस्य सायुज्यमुक्तिं प्राप्नोति । अतः प्रत्येकप्राणिभिर्धनुर्बाणचिह्नितैर्भाव्यम् वेदेषु सात्त्विकपुराणेषु सात्त्विकस्मृतिषु अन्यत्रापि बहुत्र हारीतादिस्मृतिमते तप्तधनुर्बाणादिधारण-महिमा वर्णिताऽस्ति । अतस्तप्तधनुर्बाणाङ्कितैर्भवितव्यम् । यदि कश्चित्तप्त-धनुर्बाणचिह्नितो भवितुं नेच्छति तदा स भ्रमोऽस्ति, श्रीसम्प्रदाये पञ्चसंस्कारा विहिताः सन्ति, अतस्तप्तैरेव धनुर्बाणैश्चिह्नितो भवेत्। यदि तत्रधनुर्बाणैरङ्कितो न

भवेत्तदा स शीतलधनुर्बाणैश्चिह्नितोऽवश्यं भवेत् ।

कश्चिद् वदति दासशब्दोनीचेभ्य उपयुज्जते यतः स निकृष्टवाचकोऽस्ति । साधुसमाजे श्रीवैष्णवसाधुसमाजे दासपदस्यान्ते योजनप्रथा दृश्यते इयं श्रीवैष्णवसमाजेऽपि निकृष्टा स्वीकृताऽस्ति । अस्य दासपदस्य नामान्ते योजनस्य भावनाऽपि निकृष्टाऽस्ति । अस्मिन् विषये श्रीवैष्णवसमाजानुयायिनः सनातनधर्मावलम्बिन आहुर्यन्महाशय ! भवदीय एष विचारोऽलीकोऽस्ति । श्रीमद् वाल्मीकीयश्रीमद्रामायणे सुन्दरकाण्डे श्रीहनुमदुक्तौ दासपदं श्रूयमाणं दृश्यते । ऋग्वेदे दासा इति पदं दृश्यते । दासपदे प्रथमं प्रणामं श्रीमद्वाल्मीकीयश्रीमद्रामायणस्येदं वर्तते-श्रीहनुमान् सुन्दरकाण्डे कथयति स्म-दासोऽहं कोशलेन्द्रस्य रामस्याक्लिष्टकर्मणः । हनुमाञ्छत्रुसैन्यानां निहन्ता मारुतात्मजः इति । श्रीहनुमानाहपवित्रकर्मणः कोशलदेशस्यावधस्य स्वामिनः श्रीरामस्य दासः शत्रुसेनानाशको वायुपुत्रो हनुमानस्मि । एवं रावणम्प्रति श्रीहनुमानाह । ऋग्वेदस्य सप्तममण्डले पञ्चमानुवाके षडशीतितमसूक्ते सप्तममन्त्रोऽयमस्ति-अरं दासो न मीढुषे कराण्यहंदेवाय भूर्णयेऽनागाः । गौतमऋषिः परेशश्रीरामं स्तौति-हे श्रीराम ! मम शापात् पाषाणमयीभूता मत्पत्नी अहल्या भवता स्वचरणकमलस्पर्शेन शापान्मोचिता जडाच्चेतनीकृता ततो मम मनोरथपूरको मीढुषे इत्यस्य भावोऽस्ति । स्वसद्भक्तेभ्यः सर्वस्वदायिनः सर्वशक्तिसम्पन्नस्य स्वप्रकाशमानस्य भक्तो निर्दोषोदासोऽस्मि । अतः पोडशोपचारैश्चन्दनपुष्पतुलसीदलादिभिर्भवन्तं पूजयामि । भवान् मम स्वामी वर्तते । श्रीमद्भागवतस्य सप्तमस्कन्धेऽपि नवविधभक्तौ भगवद् दास्यमेकाभक्तिरस्ति-अर्चनं वन्दनं दास्यम् इत्यादौ । अथर्वणोपनिषदि ब्रह्मसूक्ते षष्ठेऽध्याये दासपदमायाति-ब्रह्म दाशा ब्रह्मदासा ब्रह्म मे कितवाः परब्रह्मणः श्रीरामस्य वयं सर्वे दासाः स्मः । परब्रह्मणः श्रीरामस्य चरणकमलयोः सद्भक्तिंविना वयंसर्वेऽपराधिनो विद्यामहे । अतो भवदीया दासा वयं भवाम । हारीतस्मृतावपि मनुष्यैर्भवद्दासैर्भक्तिव्यभेव, एवं लिखितमस्ति । हरेर्दास्यैकपरमा भक्तिं योलब्धवान् नरः । इहैव मुक्तो राजर्षे ! सर्वकर्मनिबन्धनैः ॥ हारीतमहर्षी राजानमम्बरीषमाह यत् यो मनुष्यो भगवतो दासतारूपभक्तिं प्राप्तवानस्ति स इहैव संसारे सर्वकर्मबन्धनैर्मुक्तो भवति इत्यादि । अतो दासान्तनाम



भगवद् भक्तिसूचकमस्ति न तु नीचतावाचकं विद्यते॥१०२॥

आज जगत में ऐसे शैवशाक्त बहुत हैं जो लोग वेदों को सच्चे गुरुओं से स्वर अर्थ के सहित नहीं पढे हैं वे लोग ऐसे ऐसे आक्षेप किया करते हैं कि इस श्री सम्प्रदाय-श्रीरामानन्दसम्प्रदाय में लोग शिष्य बनके अपने शिर आदि में १२ ऊर्ध्व पुण्ड्र तिलक करते हैं तथा तप्त धनुष बाण से अपने हाथों को चिह्न करते हैं यह प्रथा अवैदिक है वेदों में इन दो वातों की कहीं पर चर्चा नहीं है तो ये दोनों प्रथाएँ अवैदिक हैं अवैदिक चिह्नित होने से लाभ ही क्या है। इस पूर्वपक्ष पर सत्ख्यातिवाद के पोषक विशिष्टाद्वैत के प्रकृष्ट आचार्य कहते हैं कि-इन दोनों विधियों में हम आपके सामने वैदिक प्रमाण दे रहे हैं सो समझ के सन्तोष कर लेवें । सबको साम्प्रदायिक रहस्यों का ज्ञान नहीं रहता है पूर्व परम्परा से कोई कोई श्रीवैष्णव सम्बन्धी रहस्यों को कुछ जानते हैं बांकी सबके सब वेदों के रहस्यों को न जान करके श्रीवैष्णवों के ऊर्ध्वपुण्ड्र तिलक के विषय में तप्त धनुषवाणादि के विषय में कुछ न कुछ आक्षेप किया करते हैं। इन सबके आक्षेपों को दूर करने के लिए कुछ प्रमाण उपस्थित किए जाते हैं। श्रीवैष्णवाचार्यजी कहते हैं कि-आप सबका आक्षेप व्यर्थ है। ऊर्ध्वपुण्ड्र तिलक विधि में तथा तप्त धनुषबाणादि विधि में यजुर्वेदकठ शाखा के तीसरे प्रश्न के तीसरे अनुवाक में लिखा है 'धृतोर्ध्वपुण्ड्रः इत्येषा श्रुतिः' 'श्रीधन्वनाऽङ्कितः' इत्येषाश्रुतिः । ऊर्ध्वपुण्ड्रधनुर्विधौ सद्बीजं ज्ञायतां हि निश्चयम् । ऊर्ध्वपुण्ड्र तिलक विधि में तथा तप्त धनुषवाण विधि में सच्चा प्रमाण यह है देखिए दोनों विधियों में यह एक ही मन्त्र है। यजुर्वेद के कठशाखा के तीसरे प्रश्न तीसरे अनुवादक की यह श्रुति है।

**धृतोर्ध्वपुण्ड्रः कृतचक्रधारी विष्णुम्परं ध्यायति यो महात्मा ।**
**स्वरेण मन्त्रेण सदा हृदिस्थितम्परात्परं यं महतोमहान्तम् ॥१॥**

जो श्रीवैष्णव सच्चे सदाचारी सर्ववेद वेदाङ्ग पारंगत विद्वान् श्रीगुरुओं से सविधि प्राप्त ललाटादि द्वादश अङ्गों में श्रीचित्रकूटी आदि की सफेद श्रीरामरज मृत्तिका से १२ ऊर्ध्वपुण्ड्र तिलक प्रतिदिन धारण करता है और सदाचार पालन के सहित भगवद् सद्भक्ति परायण है संसार के विषयों को त्याग किया है तथा यम नियम ब्रह्मचर्य धारणादि का पालन करता है भगवत्सेवा पूजा करता है गुरुजी से मिले

